'छद्मस्थवीतरागः काल सोऽन्तर्मुहूर्त्तमथ भूत्वा । युगपद्द्विविधावरणान्तरायकर्मक्षयमवाप्य ॥१॥ शाश्वतमनन्तमतिशयमनुपममनुत्तरमथो निरवशेषम् । सम्पूर्णमप्रतिहत सम्प्राप्तः केवल ज्ञानम्' ॥२॥ इति प्रशमरतौ ( गा० २६७, २६८ ) तथा 'भाविनि भूतवदुपचार' इति न्यायात् प्रत्यासन्न-भाविपर्यायस्य भूतवद्भणन युक्तमेव । यथा गर्भस्थोऽप्यर्हन् शक्रेण भावार्हत्तया स्तुतः । एव क्षीणमोह-मात्रस्य छद्मस्थवीतरागस्याऽपि कथञ्चित्केवलीत्वव्यपदेशो न दोषावहः । किञ्च–केवलित्वगमकानि सप्तापि लिङ्गानि मोहनीयक्षयसमुत्थान्येव, 'केवली हि क्षीणचारित्रावरणत्वान्निरतिचारसयमत्वादप्रतिषेवित्वान्न कदाचिदपि प्राणानामतिपातयिता भवती'तिवचनात् । तेन लिङ्गापेक्षया द्वयोरपि साम्यमेव । एवं च सति यदि क्षीणमोहस्य छद्मस्थवीतरागस्य कथञ्चित्केवलित्व नाभ्युपगम्यते, तर्हि क्षीणमोहे छद्मस्थ-वीतरागे सप्तापि लिङ्गानि व्यभिचरन्ति । तत्र हेतुषु विद्यमानेषु साध्यस्य केवलित्वस्यासत्त्वात् । ननु भो ! आस्तामन्यत्, पर केवलिनो ज्ञानादीनि पञ्च अनुत्तराणि भवन्ति । यदागमः—

'केवलिस्स ण पच अणुत्तरा प० त० अणुत्तरे णाणे १ अणुत्तरे दसणे २ अणुत्तरे चरित्ते ३ अणुत्तरे तवे ४ अणुत्तरे वीरिए' ५ त्ति, श्रीस्थानाङ्गे (सू० ४१०) एतानि पञ्चापि केवलिन्येव वर्त्तमानानि कथ,? केवलित्वगमकलिङ्गतया नोक्तानीति चेत् । उच्यते–एतेषा पञ्चानामपि छद्मस्थज्ञानागोचरत्वे-नानुमितिजनकत्वाभावात् न लिङ्गानि भवितुमर्हन्ति, प्रत्युत केवलज्ञानादिपरिज्ञानार्थमेव उक्तलिङ्गाना प्रज्ञापनात् । एतेन सप्तापि प्राणातिपातादीनि छद्मस्थाना रागद्वेषजनितानि, तेषा तयोः सत्त्वात् ।

---

દર્શનાવરણ અને અતરાય કર્મને ક્ષય પામીને શાશ્વત નિત્ય અતરંહિત અતિશયવત અતુલ સર્વોત્કૃષ્ટ અખડ સપૂર્ણ એહવુ કેવલજ્ઞાન પામ્યો ' થાનારને વિષે થયાની પરે જ કહણુ છે એ ન્યાયથી વલી પાસે જે થાનાર પર્યાય તેવતને થયાની પરે કહેવુ તે યુકત જ છે જિમ ગર્ભસ્થ એ ભગવત ઇંદ્રિ ભાવ અરિહતપણિ સ્તવ્યે : अत, एव छउमत्थो जाव चउनाणी એહવો પાઠથિકે પણિ विअट्टछउमाण-मित्यादि દીસે છે. ઇમ વિવક્ષાવશે अह तायमो तत्थ मुणीण तेसिं तथा सासणभावे नाणमित्यादि દીસે છે. ઇમ ક્ષીણમોહમાત્ર છદ્મસ્થ વીતરાગ તેહને પણિ કિણેક પ્રકારે કેવલીપણિ કહણુ તે દોષનુ ઉત્પાદક નહિ. વલી કેવલીપણાના ગમક સાતે લિગ મોહનીયક્ષયથી ઉપનાજ. કેવલી તે ક્ષીણચારિત્રાવરણપણાથી તે પણિ નિરતિચ રસયમપણાથી તેપણિ અપ્રતિષેવિપણાથી કિવારે પણિ પ્રાણાતિપાતયિતા ન હુઇ એહવા વચનથી. તેણે કરી લિગની અપેક્ષાઇ બિહુને સામ્યજ. ઇમેક છતા જો ક્ષીણમોહ જે છદ્મસ્થ વીતરાગને કુણેક રૂપે કેવલીપણું ન માનીઈ તઉ ક્ષીણમોહ વીતરાગને વિષે સાતે લિગ તે વ્યભિચરઈ. તિહા હેતુ છઇ ને સાધ્ય જે કેવલીપણુ તેહના અણછતાપણાથી પૂછે છે–રહો બીજુ પણિ કેવલીને પાચ જ્ઞાનાદિક તે અનુત્તર હુઈ ઉત્કૃષ્ટ જ્ઞાન, ઉત્કૃષ્ટ દર્શન, ઉત્કૃષ્ટ ચારિત્ર, ઉત્કૃષ્ટ તપ, ઉત્કૃષ્ટ વીર્ય એ ઠાણાગે એ પાચે કેવલિનઈજ વિષે વર્તતા છે. તે કિમ કેવલિપણુ જણાવનાના લિગપણે ન કહ્યા ? એહવુ કહઇ છઈ તે, ઉપરિ કહિઇ છે તે પાચેનઇ પણિ છદ્મસ્થજ્ઞાનનઇ અવિષયપણિ અનુમિતિ જે સાધ્યનુ જ્ઞાન તેહને નીપજાવવાપણાના અભાવથી લિગ થાવાનઇ યોગ્ય ન હુઈ સાહમુ કેવલજ્ઞાનાદિ જણાવવાને અર્થેજ ઉક્તલિગને પ્રરૂપવાથી એટલે પ્રાણાતિપાતાદિક તે છદ્મસ્થને રાગદ્વેષજનિત છે તેહને તેહ રાગદ્વેષના છતાપણાથી કેવલીને રાગદ્વેષથી ઉત્પન્ન જે પ્રાણાતિપાતાદિક તેહનો નિષેધ, પણિ સર્વથા નિષેધ નહી ચક્ષુની પાપિણીના નિપાતમાત્રે જનિત જે અસખ્યેય વાયુકાયની વિરાધનાનઇ તેહને કેવલિને પણિ અશક્યપરિહારથી, એહા પરની આશકા પણિ ટાલી. કેવલિને તેહની વિરાધનાને કોઇ

केवलिनस्तु रागद्वेषजनितानां तेषां निषेधः, न पुनः सर्वथानिषेधः, चक्षुःपक्ष्मनिपातमात्रजन्यायाः असङ्ख्येयवायुकायविराधनायाः केवलिनोऽप्यशक्यपरिहारादिति पराशङ्काऽपि परास्ता। केवलिनस्तथाभूतविराधनायाः क्वाप्यागमेऽनुक्तत्वात्, प्रत्युत केवलिनो वायुकायविराधनाया निषिद्धत्वात्। यदागमः- 'छप्पि अ जीवनिकाए णोवि हणे णोवि अ हणाविज्जा' इत्यादि श्रीआचाराङ्गनिर्युक्तिवचनं प्राग् (पत्राक ५४) उपदर्शितमेव। तथा अशक्यपरिहारोऽपि केवलिनो न भवति, हेयस्यैवाभावादित्यग्रे दर्शयिष्यते। किञ्च-परकीयरागद्वेषयोस्तदभावस्य च निरतिशयछद्मस्थज्ञानाऽगोचरत्वेन तथाभूतछद्मस्थमात्रानुमितिजनकलिङ्गाना विशेषणत्वासम्भवात्। सम्भवे च यो रागद्वेषवान् स छद्मस्थ., यस्तु रागद्वेषरहितः स केवलीति विशेषणज्ञानमात्रेण छद्मस्थकेवलिनोर्विवेकेन सम्यक् निर्णये जाते प्राणातिपातादीना तन्निषेधरूपाणा च सप्ताना विशेष्यपदाना भणनमुन्मत्तप्रलापकल्प सम्पद्येत, प्रयोजनाभावात्, धर्मोपदेशादिक्रियामात्रस्यापि तथात्वेन सप्तसङ्ख्याभणनस्यायुक्तत्वाच्च। किञ्च-अप्रसिद्धविशेषणदानेन हेतूना सन्दिग्धस्वरूपासिद्धताऽपि। वस्तुतस्तु रागद्वेषपरिज्ञानार्थमेव प्राणातिपातादीनि लिङ्गानि स्युः, मोहनीयसत्तामन्तरेण सद्भूतजीवघातादेरसम्भवादित्यग्रे दर्शयिष्यमाणत्वात्। किञ्च-सत्तावर्तिरागद्वेषवत्त्व-छद्मस्थत्वयोरैक्यमेव, उभयोरपि शब्दयोः परस्पर पर्यायवाचित्वात्। एव रागद्वेषराहित्य-केवलित्वयोरपि मन्तव्यम्। तथा च साध्यविशिष्टे हेतौ ज्ञाते साध्यस्याप्यवश्य ज्ञातत्वात्, विशेषणज्ञानमन्तरेण विशिष्टज्ञानासम्भवात्। नहि वह्निविशिष्टे धूमे ज्ञाते वह्निरज्ञातो भवति। तथा च प्राणातिपातादीनामिव

---

આગમને વિષે અણુકહેવાપણાથી સાહમુ કેવલીનઇ વાયુકાયની વિરાધનાનઇ પણિ નિષિદ્ધપણાથી એ તો પૂર્વિ દેખાડયુ છઇ અશક્યપરિહારપણિ કેવલીનઇ ન હુઇ હેયના અભાવથી. એહવુ આગલિ દેખાડીચ્યે. વલી પરસમ ધી રાગદ્વેષ અને તેહના અભ વનઇ નિરતિશ। જે છદ્મસ્થ જ્ઞાન તેહને અગોચરપણિ કરી તેહવા જે છદ્મસ્થમાત્રને અનુમિતિજનક જે લિગ તેહને વિશેષણપણાના અસભવથી અને જઉ સભવઇ તઉ જે રાગદ્વેષવ ત તે છદ્મસ્થ અને જે રાગદ્વેષરહિત તે કેવલિ એહવે વિશેષણજ્ઞાનમાત્રેજ છદ્મસ્થ અને કેવલીનો જે સમ્યગરીતિ નિશ્ચય તે થઇ હુતે પ્રાણાતિપાતાદિક અને તેહના નિષેધરૂપ જે સાતે પદ જે વિશેષ્યરૂપ તેહનુ કહેવુ તે ઉન્મત્તના પ્રલાપને સરીખુ સપજે પ્રયોજનના અભાવથી ધર્મોપદેશાદિ ક્રિયામાત્રને તિમ પણિ સપ્ત સખ્યાભણનને અયુક્તપણાથી વલી વલી અપ્રસિદ્ધ વિશેષણને દેતે હુતે હેતુને સદિગ્ધ સ્વરૂપાસિદ્ધપણું હુઇ. પરમાર્થ વૃત્તિ તઉ રાગદ્વેષની પરિજ્ઞાનને અર્થેજ પ્રાણાતિપાતાદિક લિગ હુઇ મોહનીયની સત્તા વિના છતા જીવઘાતાદિકના અસભવથી એહવુ આગલિ દેખાડીચ્યે તે પણાથી વલી સત્તાવર્તિ જે રાગદ્વેષવતપણુ અને છદ્મસ્થપણું એક જ છે એ બિહુ શબ્દને માહોમાહિ પર્યાયવાચીપણાથી- એકજ રીતિ બોલાવ્યાથી ઇમ રાગદ્વેષરહિતપણુ અને કેવલીપણુ તેહને પણિ માનવુ તિમ તો સાધ્યયુક્ત જિવારે હેતુ જાણ્યો તિવારે અવશ્યેજ સાધ્યને જાણપણાથી વિશેષણજ્ઞાન વિના વિશેષણયુક્ત જ્ઞાનના અસભવથી. વહ્નિવિશિષ્ટ ધૂમ જાણે હુતે વહ્નિ તે અજાણ્યો ઇમ ન હુઇ. તિવારે તો પ્રાણાતિપાતાદિકની પરે છદ્મસ્થપણું અને કેવલીપણુ તે બિહુને પ્રત્યક્ષપણાથી સાતે લિગને સ્વરૂપની હાનિ થાઇ. સાધીઇ છે તેહના જનકપણાના અભાવથી વલી રાગદ્વેષને જીવઘાતાદિક પ્રતિ કારણપણુ'ઇ તે દૃષ્ટઇને પણિ સમાન છે છદ્મસ્થ સયતને પ્રાણાતિપાતાદિકને વિષે તે કારણતાને તેજ કહિઆપણાથી ઇમ કરતા અર્થથી છદ્મસ્થયતીને જીવરક્ષા-સત્યભાષણાદિક તે રાગદ્વેષાભાવે ઉત્પન્ન તે થઉ જે મારે કાર્યનુ પ્રતિપક્ષપણુ તે કારણને પ્રતિપક્ષપણિજ હુઇ. તે તો પરમતે ન સંભવે. જે માટિ જઉ રાગદ્વેષ સત્તાવર્તી અહીઈ તઉ ઉપશાન્ત ગુણસ્થાનતાઈ

छद्‌मस्थत्वकेवलित्वयोरपि प्रत्यक्षत्वापत्त्या समानामपि लिङ्गाना स्वरूपहानिरेव, अनुमितिजनकत्वाभावात्। किञ्च-रागद्वेषयोर्जीवघातादिकं प्रति कारणता तवापि सम्मता, छद्‌मस्थसयताना प्राणातिपातादौ तस्यास्त्वयाप्युक्तत्वात्। एव च सत्यर्थात् छद्‌मस्थसयताना जीवरक्षा-सत्यभाषणादिक रागद्वेपाभावजन्य सम्पन्नम्। यतः कार्ययोः प्रतिपक्षत्व कारणयो प्रतिपक्षत्वेनैव स्यात्। तच्च परमते न सम्भवति। यतो यदि रागद्वेषौ सत्तावर्तिनो गृह्येते तर्हि उपशान्तगुणस्थान यावत् तयोरनवरत सद्भावेन तदभावस्याऽसम्भवात्। यदि चोदितौ तर्हि सूक्ष्मसम्परायगुणस्थान यावत् तथैवावसातव्यम्। एव केवलिनोऽपि रागद्वेषाभावस्य जीवघातादिहेतुत्वे सिद्ध अर्थात् रागद्वेपावेव जीवरक्षादिक प्रति हेतू भवतः। तदपि न सम्भवति, रागद्वेषाभावस्यानवरतं सद्भावात्, रागद्वेपसद्भावे च वीतरागत्वहानेश्च। एव छद्‌मस्थकेवलिनोरुभयोरपि जीवरक्षादिक कथमपि न सिद्‌ध्येत्, कारणाभावात्। तथा च प्रवचनमात्रस्य बाधा स्यात्। यतः प्रवचने केवली 'इद सावद्य'मिति प्रज्ञाप्य तत्प्रतिषेविता न भवति। प्रज्ञापयति च प्राणातिपातादिकं सावद्यमेव। अत एव 'सव्वे पाणा सव्वे भूआ सव्वे जीवा सव्वे सत्ता न हतव्वा' इत्याद्युपदिष्टवान् भगवान् श्रीमहावीरः। तस्मात् विना अपवाद घात्यजीवविषयकाभोगेन विधीयमानो जीवघातो रागद्वेषजन्य इति व्यपदेशः सर्वसम्मतः। स च विना अपवाद सयताना न भवत्येव, असयतत्वभवनभयहेतोराभोगस्य प्रतिबन्धकत्वात्। यत्तु सामान्यत सत्तोदयरूपावपि रागद्वेषौ विना अपवादमनाभोगसहकृतावेव कदाचित् द्रव्यतो जीवघातादिहेतू भवत इति प्रवचने प्रतीत, तत्तु जीवघातस्य रागद्वेषजन्यत्वाभिव्यञ्जक न भवति, तज्जीवविषयकरागद्वेषयोरभावात्। आभोगे च जाते मिथ्यादुष्कृतादिप्रायश्चित्तप्रतिपत्तेश्च।

---

ते रागद्वेषनई निरतर सद्‌भावे तेना अभावथी अने जो उदित मानई, तउ सूक्ष्मसपराय-गुणस्थानताइं रागद्वेष छते ते जीवरक्षादिकना अभावथी. एहवु जाणिवु इम केवलीने पणि रागद्वेषाभावनइं जीवघातादिनु हेतु पणि सिद्ध थइं अर्थापत्ति रागद्वेष ज जीवरक्षादिक प्रति हेतु हुइं ते पणि न सभवइ, रागद्वेषना अभावने तेहने निरतर सद्‌भावथी. रागद्वेषने सद्‌भावे वीतरागनी हानीथी वली. इम तउ छद्मस्थ अने केवली ए बिहुने जीवरक्षादिक किमे सिद्ध न हुई कारणना अभावथी. तिवारे तो प्रवचनमात्रनी बाधा हुई जे माटे प्रवचनने विषई केवली 'ए सावद्य एहवुं कहीन तेहने सेवनार न हुई' प्ररुपे पणि प्राणातिपातादिक ते सावद्य, एतलाजवती सर्व प्राण-द्विंद्रियादिक सर्वतरु सर्वेंद्रिय अपरजीव ते न हणिवा. एहवु कहेतो हुओ भगवत श्री महावीर. ते माटि हतव्यजीवविषयक जे आभोग तेणि सहित जे तद्विषयी आ रागद्वेष तेणे नीपजावीतो जे जीवघात ते रागद्वेषजन्य एहवो बोल ते सर्वने सम्मत छे ते तो अपवादविना सयतीने न हुइ ज, असयतपणु थावानु जे भय, तेहनो हेतु जे आभोग, तेहने प्रतिबधकपणाथी जे तो सामान्यथी सत्ता अने उदयरुप पणि रागद्वेष ते विनापवाद, अनाभोगइं सहकृतज किवारेकि द्रव्यथी जीवघातना हेतु हुइं एहवु प्रवचननइं विषइ प्रसिद्ध छइं. ते तो जीवघातने रागद्वेषे जन्यपणानु ज्ञापक न हुइ. ते जीवविषयीआ रागद्वेषना अभावथी. अने आभोग थइ हुतें मिथ्यादुकृतादि प्रायश्चित्तनी प्रतिपत्तिथी. वली केवली तउ क्षीण छे रागद्वेष अनेअनाभोग जेहने एहवो हुतो किम द्रव्यथी जीवघातादिकने विषे प्रवर्त्तइं? कारणना अभावथी. एहवु विचारवु.

हिवें कुणेक उरं, खल द्रव्यथी जीवघातादिके ते दूषण नही. केवलीने जीवघात द्रव्यथी. ते पणि दूषण ए वचन ज दूषणरुप इत्यादिक कुमतनी परे कहे छे. ते तो बहुलाभ अल्पदोष तद्वत्

केवली तु क्षीणरागद्वेषानाभोगः कथं द्रव्यतोऽपि जीवघातादिषु प्रवर्त्तते ? कारणाभावादिति पर्यालोच्यम्। किञ्च–छद्मस्थसयताना यो यज्जीवादिविषयकाभोगो विना अपवाद जीवरक्षादिहेतुः तस्यैव जीवघातहेतुत्वेन परिणतौ केवलिनो जीवरक्षादिक कथमपि न भवेत् , तत्कारणस्य वैपरीत्येन परिणमनात्। अत एव–

'अग्गिइं उण्हु होइ जगु वाइ सीअलु तिम्ह । जो पुण अग्गिइ सीयला तसु उण्हत्तणु किम्ह ॥१॥ इत्यपभ्रंशयाम्। तथा अन्यत्राऽपि–'अमृत यस्य विषायति तस्य चिकित्सा कथ क्रियते ? ' इत्यादि। किञ्च–सत्तोदयवर्त्तित्वमात्रेण व्यक्त्या निर्विषयकावपि रागद्वेषौ यदि जीवघातादिकं प्रति रागद्वेषजन्योऽय जीवघात इति व्यवहारहेतुत्वेन हेतू भवतस्तर्हि ज्ञानाद्याराधनक्रियामात्रं प्रति तौ कारणत्वेन वक्तव्यौ स्याताम् । एवं ज्ञानादीनामपि जीवघातादिकं प्रति कारणत्वं प्रसज्येत, तेषामपि सत्तोदयवर्त्तित्वेन विद्यमानत्वात्, तस्मात् तथाभणनमज्ञानमूलकमेव । ननु भो ! आस्तामन्यत् , पर 'जीवेण भंते ! सयां समिअं एअइ' इत्यादिभगवतीवचनेन स्वल्पयाप्येजनादिक्रियया आरम्भादयोऽभिहिताः। अस्ति च केवलिनोऽप्येजनादिक्रिया, अतस्तस्याऽपि जीवविराधना भवत्येवेत्यस्माकं मतिरिति चेत्। मैवं, इह आरम्भादिशब्दैस्तद्धेतूना योगानामेवाभिधानात् । एतच्चाग्रे ग्रन्थसम्मत्या व्यक्तीकरिष्यते । अन्यथा 'तत्थ ण जे ते अप्पमत्तसंजया ते ण णो आयारभा णो परारभा णो तदुभयारंभा अणारभा' इत्यादिभगवतीवचनेनैव आस्ता केवली, अप्रमत्तसंयतमात्रस्यारम्भाद्यभावाभ्युपगमे परस्य महति सङ्कटे पतन स्यात, परस्परं विरोधेन कान्दिशीकत्वात् । तस्मादिह निषेधसूत्रे आरम्भशब्दोऽशुभयोगजन्यजीवघाताभि-

---

--मुक्री व्यापादननु सभारिवु, जाणिं हु ते प्रायश्चितन पडिवजवु इत्यादिक अनेक दूषण उपजे छे. वती-उपेक्षित करवु. वली छद्मस्थयतीने' जे जीवादिकविषयक आभोग, ते विनापवाद जीवरक्षादिकनु हेतु अने तेहने' जीवघातहेतु' परिणमते केवलीमे' जीवरक्षादिकं किमे न हुइ. तेहना कारणुने विपरीतपणे परिणुमवाथी. एतलाजवती 'अग्नि उष्णु हुइ जगत् अने वाउइ शीतल तिम पणि जे अग्नि सीतल तेहने उष्णुपणु' किम हुइ'?' ए अपभ्रंशीभाषामध्ये छइ. अमृत जेहने विषनीपरे आचरे तेहने वैदगरु सी रीति कीजे'' इत्यादि विचारिवु. वली सत्ता अने उदयवर्त्तिपणामात्रे व्यक्ति निर्विषयकपणि रागद्वेष जउ जीवघातादिक प्रति रागद्वेषे जन्य 'ए जीवघात एहवु व्यवहारहेतु पणि हेतु हुइ'. तउ ज्ञानाद्याराधन क्रियामात्र प्रति ते रागद्वेष कारणपणि कहेवा योग्य हुइ. इम जीवघातादिक प्रते ज्ञानादिकने पणि कारणपणुं हुइ. तेहने पणि-सत्ता अने उदयवर्ति पणि करी विद्यमानपणाथी ते माटि' तिम कहेवु ते अज्ञान मूलकज जाणिवु पूछे छे–रहो बीजु पणि 'जीव भगवंत ! हाले' इत्यादि भगवतीने वचने अल्पइ एजनादिक्रियाइ आरंभादिक कह्या, अने केवलीने' पणि एजनादिक्रिया छे, ए कारणुवती तेहने पणि जीवविराधना हुइ ज. एहवी अम्हारी छे मति, एहवु जउ कहिस्ये तिम म बोले, इहा आरंभादिशब्दइ आरंभादिकहेतु ते योग, तेहना अभिधानथी, एतउ आगलि ग्रंथसम्मति व्यक्त करीस्यइ, इम न मानीई तो तिहा—

'जे अप्रमत्तयती ते आत्मारंभी नहीं परारंभी नहि, ते बिहुना आरंभी नही, तउ स्युं ? अनारंभीज' इत्यादि भगवतीने वचनथी रहउ केवली, अप्रमत्तसंयतमात्रे आरंभादिकनो अभाव मानवे, परने महासंकटने विषे पडवु थाइ. माहोमाहि विरोधे-करी भयभीतपणाथी, ते माटि' ए निषेधसूत्रे आरंभशब्द ते अशुभयोगे जन्य जे जीवघात, तेहनो कहनार, तिहा अशुभपणु पणि योगनु, केवल दूषयुक्त

धायकः। तत्राशुभत्वमपि योगानां न केवल फलोपहितयोग्यतया जीवघातहेतुत्वमात्रेण उपशान्तगुणस्थानं यावद् अप्रमत्तसयतांना कदाचित्सद्भूतजीवघातहेतुत्वेन अनारम्भकत्वप्रतिपादकानन्तरोक्तागमवचनस्य बाधापत्तेः। तस्मात् प्रमत्तयोगानामशुभत्वं फलोपहितयोग्यतया घात्यजीवविषयकाभोगपूर्वकजीवघातहेतुत्वेनावसातव्यम्। अत्र फलोपहितयोग्यतयेति पद केवलियोगानामशुभत्वनिवारणार्थमेव, तेषा स्वरूपयोग्यतयैवोक्तप्रकारेण जीवघातहेतुत्वात्। न पुनः फलोपहितयोग्यतया, कारणानामभावादित्यनन्तर वक्ष्यते। उक्तप्रकारोऽपि केवलिनः सर्वज्ञत्वेनानाभोगस्यात्यन्तासत्त्वात्। प्रमत्तयोगानामशुभत्वमित्याद्यर्थाभिव्यञ्जकं तु प्रमत्तयोगाना फलवत् शुभत्वाशुभत्वाभ्या द्वैविध्याभिधायकमागमवचनमेव। तथाहि-'तत्थ णं जे ते पमत्तसंजया ते ण सुहं जोग पडुच्च णो आयारभा जाव आणारभा, असुह जोग पडुच्च आयारभावि जाव णो अणारभा इत्यादि' भग० श. १ उ० १ अत्रापि प्रमत्तसयताना सामान्यतः प्रमत्ततासिद्ध्यर्थं तदीययोगाना स्वरूपयोग्यतया आभोगपूर्वकजीवघातहेतुत्व वक्तव्यम्। कादाचित्काशुभयोगजन्यारम्भकत्वसिद्ध्यर्थं चाभोगोऽपि घात्यजीवविषयकत्वेन व्यक्तो वक्तव्य.। तद्वत एव कस्यचित् प्रमत्तस्य सुमङ्गलसाधोरिवापवादप्रतिषेवणावस्था प्राप्तस्यात्माद्यारम्भकत्वात्। सयतत्व च तस्य तदानीमपवादपदोपाधिकविरतिपरिणामस्यानपायात्। न चैवमप्रमत्तसयतस्य सम्भवति, तस्यापवादपदाधिकारित्वाभावेनाभोगपूर्वकजीवघातहेतूना योगानामभावात्। यस्त्वपवादपदप्रतिषेवणाराहित्यावस्थायामपि अप्रमत्तानामिव सद्भूतजीवघातः स चानाभोगजन्य एव, तदानीमनाभोगस्यापि तस्य विद्यमानत्वात्। अत एवाप्रमत्तानामिव प्रमत्तानामपि योगाना शुभत्वेन नात्माद्यारम्भकत्वमिति। ननु भोः! स्वरूपयोग्यता-फलोपहितयोग्यतयोः को भेद ?—

---

યોગ્યતાઇ જીવઘાત હેતુપણામાત્રે નહી ઉપશાંતગુણસ્થાનકતાઇ અપ્રમત્તસયતને કદાચિત્ સદ્ભૂત જીવઘાતહેતુ પણિ અનારભકપણાનુ પ્રતિપાદક જે અનતરોકત જે આગમવચનતણો '**આયારંભા**' ઇત્યાદિ તેહને બાધની આપત્તિથી તે માટિં પ્રમત્તયોગને અશુભપણુ તે ફલોપહિત યોગ્યતાઇ હનનીય-જીવવિષઇઓ જે આભોગપૂર્વક જીવઘાત, તેહને હેતુપણુઇ જાણવુ ઇહા ફલોપહિતયોગ્યતા એહવુ પદ, તે કેવલીના યોગનઇ અશુભપણું વારવાનઇ. તે કેવલીયોગનઇ સ્વરૂપ-યોગ્યતાઇજ કહે પ્રકારે જીવઘાત પ્રતિ હેતુપણાથી પણિ ફલોપહિતયોગ્યતાઇ નહી કારણના અભાવથી એ હિવડાજ કહીસ્યઇ. કહિઉં તે પ્રકારપણિ કેવલીનઇ સર્વજ્ઞપણે કરી અનાભોગનુ અત્યત અછતાપણાથી, પ્રમત્તયોગનઇ અશુભપણું ઇત્યાદિક અર્થનું અભિવ્યજકપણુ તઉ પ્રમત્તયોગનઇ ફલવત શુભ અનઇ અશુભપણિ કરી દ્વિવિધપણાનુ કહનાર સિદ્ધાતવચન જ

તે કિમ ? તિહા જે તે પ્રમત્તયતી તે શુભયોગ ઉદ્દેશી આત્માર ભી નહિ, યાવત્ અનારભી અશુભ-યોગ ઉદ્દેશી આત્મારભી પણિ, યાવત્ અનારંભી નહિ ઇતિ ભગ શ ૧ ઉ ૧૧ ઇહા પણિ પ્રમત્તસયતને સામાન્યથી પ્રમત્તપણાની સિદ્ધિને અર્થે તેહના યોગને સ્વરૂપયોગ્યતાઇ આભોગપૂર્વક જીવઘાતનુ હેતુપણુ કહેવુ કદાચિત્ હુઇ એહવો જે અશુભયોગ, તેણે જન્ય જે આરભકપણું, તેહની સિદ્ધિને અર્થે, આભોગ પણિ હતવ્ય જીવવિષયીએ તે પણુ કરી વ્યક્ત કહેવો તદ્વત જે કોઇક પ્રમત્તને સુમગલસાધુની પરે અપવાદપદ પ્રતિષેવણાની અવસ્થાને પ્રાપ્ત એહવાને આત્માદિકના આરભકપણાથી, સયતપણુ તો તેહને તિવારે અપવાદપદે યુક્ત જે વિરતિપરિણામ, તેહના અણુજાવાપણાથી. ઇમ અપ્રમત્તસયતને ન સંભવે, તેહને અપવાદપદના અધિકારિપણાને અભાવે, આભોગપૂર્વક જે જીવઘાત તેહના યોગના અભાવથી, અને જે અપવાદપદ પ્રતિસેવનાની રહિતપણાની અવસ્થાને વિષે પણિ અપ્રમત્તની પરે છતો જે જીવઘાત તે

इति चेद् । उच्यते-यस्य यदन्तर्गतत्वेन विवक्षितकार्यं प्रति कारणता, तस्य तदन्तर्गतत्वेनैव फलवत्तया फलोपहितयोग्यता । अन्यथा तु स्वरूपयोग्यतैव, सत्यपि तस्य कारणत्वे तदितरसकलकारणराहित्येन विवक्षितकार्याजनकत्वात् । परं स्वरूपयोग्यता एकस्मिन्नपि कारणे सजातीयविजातीयानेकशुभाशुभकार्याणां नानाप्रकाराः आधाराधेयभावसम्बन्धेन ( सहजाता' ) कारणसमानकालीनाः । फलोपहितयोग्यतास्तु स्वरूपयोग्यताजनिता अपि कादाचित्क्य एव, तदितरसकलकारणसामग्र्याः कादाचित्कत्वात् । यच्च कादाचित्कत्वं, तत् केषाञ्चित् कारणानां कदाचिदपि न भवत्येव । तेन फलोपहितयोग्यताः केषाञ्चित्कारणानां सम्भवन्त्योऽपि कादाचित्क्य एव मन्तव्याः । अत एव केवलिनो योगाः अशुभकार्यमात्र प्रति सर्वकालं स्वरूपयोग्यताभाज एव भवन्ति । न पुनः कदाचिदपि फलोपहितयोग्यताभाजोऽपि, अशुभकार्यमात्रस्य कारणाना ज्ञानावरणीयोदिघातिकर्मणामभावेन तदितरसकलकारणसाहित्याभावात् । शुभकार्याणां तु यथासम्भवं कदाचित्फलोपहिता योग्यताऽपि स्यात् घातिकर्मा भावस्यापि कारणत्वेन तथैव कदाचित् (कालादि) तदितरसकलकारणसाहित्यस्य सम्भवादिति न कश्चिद्विरोधः । ननु भो' ' गगाए णाविओ णदो ' इत्यादिव्यतिकरोपलक्षितः श्रीआवश्यकनिर्युक्तिकारोको धर्मरुचिनामानगारो विना अपवाद नाविकादिपञ्चेन्द्रियजीवव्यापादकः कथं सयत ? इति चेत् । मैव, अपवादस्वरूपस्य सम्यगपरिज्ञानेन मृपाभापित्वात् । यतोऽपवादस्तावत्सावद्यत्वेन प्रतिषिद्धस्य सालम्बनप्रतिपेवणार्हः । तत्रालम्बनं तावद् द्वेधा-पुष्टालम्बनम पुष्टालम्बन च । तत्र पुष्टालम्बनेनापवादप्रतिपेवणं हि (.तावत् ) शक्त्यभावहेतुकज्ञानादिहानेः प्रतिबन्धकं

---

અનાભોગે જન્યજ તિંવારે અંનાભોગ તે પણિ તેહને વિદ્યમાનપણાથી એતલાજવતી અપ્રમત્તની પરિ પ્રમત્તના પણિ યોગને શુભપણિ કરી આત્મારભકપણું નથી પૃછે છે-સ્વરૂપયોગ્યતા અને ફલોપહિત-યોગ્યતા એ બિ મધ્યે સ્યો ભેદ ? એહવુ બોલે તે ઉપરિ કહિઇ છે જેહને મધ્યે પહુતા પણિ કરી ઇપ્સિત કાર્યપ્રતિ, કારણપણાઈ તેહને તન્મધ્યગતપણિ જ ફલવતપણે ફલોપહિત-યોગ્યતા. ઇમ નહિ તિહા સ્વરૂપ-યોગ્યતા જ. છતે પણિ તેહને' કારણપણિ તે કારણથી બીજા સકલકારણને રહિતપણિ કરી વાછિતકાર્યના અજનકપણાથી. પણિ સ્વરૂપે' કારણતા તે એકે પણિં કારણને વિષઇ સજાતીય અને વિજાતીય જે અનેક શુભાશુભકાર્ય તેહને નાનાપ્રકારરૂપ આધારાધેયભાવસબધે કારણસાથે એકકાલોદ્ભવ. ફલોપહિત-યોગ્યતા તઉ સ્વરૂપ-યોગ્યતાઇ જનિત પણિ કિવારે કિ થઇ જ. તેથી અન્યસકલકારણ સહિતપણાને કાદાચિત્કપણાથી. અનઇ જે કાદાચિત્ક તે કેનલાએક કારણને કિવારેકિં ન હુઇ પણિ તે વતી ફલોપહિત-યોગ્યતા તે કેતલએક કારણને સભવતીઉ પણિ કિવારેકિ ઉપનીઉ જ માનવી એતલાજવતી કેવલીના યોગ તે અશુભકાર્યમાત્ર પ્રતિ સ્વરૂપયોગ્યતાના ભજનારાજ હુઈ પણિ કિવારે' ફલયુક્તયોગ્યતા ભજનાર ન હુઇ. અશુભકાર્યમાત્રના કારણ જે જ્ઞાનાવરણીયાદિ ધાતીકર્મ, તેહને અભાવે. તે વિના સકલકારણ-સહિતપણાના અભાવથી શુભકાર્યની તઉ યથાસભવે કિવારેકિ ફલયુક્તયોગ્યતા પણિ હુઈ, ઘાતિકર્મના અભાવને' પણિ કારણપણિં કરી કિવારેકિ તે વિના સકલકારણસહિતપણાના સભવથી એવતી કિસ્યોએ વિરોધ નહી

-પૂછે છે—' ગગાઈ નાવિક નંદ '. ઇત્યાદિ સંબધઈ ઓલખાવ્યો શ્રીઆવશ્યક નિર્યુક્તિકારે' કહિઓ ધર્મરૂચી નામે અનગાર, તે અપવાદ વિના નાવિકાદિપચેંદ્રિયનો વ્યાપાદક કિમ સયત હુઈ ? એહવું મ બોલિ. અપવાદપદના સ્વરૂપને સમ્યગ્ અણપરિજ્ઞાને કરી મૃષાભાષિપણાથી જે માટે' અપવાદ તઉ સાવદ્યપણિં નિષેધ્યાને' સાલબન સેવવાયોગ્ય, તિહા આલબન બે પ્રકારે પુષ્ટ આલબન અને અપુષ્ટ આલબન

किम् ? इति पर्यालोचनयैव भवति । यथा विमलवाहनराजव्यापादनं सुमङ्गलसाधोः । अपुष्टालम्बनेन च शक्तिसद्भावेऽपि अहो ! अय पापात्मा 'दुष्टो मुधैव ममोपसर्गकारीतिबुद्ध्यैवापवादप्रतिषेवणम् । यथा नाविकादिव्यापादनं धर्मरुचेरिति । सूक्ष्मदृशा पर्यालोचनायां तु नाविकसिंहयोर्व्यापादनं पुष्टालम्बनेनैव, तत्कृतोपसर्गस्य ज्ञानादिहानिहेतुत्वात् । तेन क्वचित् पुष्टालम्बनं क्वचिदपुष्टालम्बनं च । न पुनः तन्निरालम्बनं, येनापवादाभावः स्यात् । तत्रालम्बनस्यापुष्टत्वं धर्मरुचेर्ज्ञानादिहानिप्रतिबन्धकशक्तिसद्भावेनैवावसातव्यम् । परमपुष्टालम्बनप्रतिषेविणस्तथाभूतो जीवघातः संयमपरिणामानपायहेतुत्वेन सञ्ज्वलनकषायजन्योऽप्य-कषायजन्यो मन्तव्यः । अप्रशस्तकषायस्तु साधूनामनुचित एव । अत एव तद्व्यञ्जकमागमवचनं यथा—

'किं इत्तो कट्ठतरं जं मूढो खाणुगंमि अप्फिडिओ । खाणुस्स तस्स रूसइ न अप्पणो दुप्पउत्तस्स' ॥१॥ त्ति आ० नि० वचनं धर्मरुचिमनगारमुद्दिश्यैवोक्तम् । अन्यथा एवंविधवचनानुपपत्तिः प्रसज्येत । एवं सम्यग्विचारे क्रियमाणे छद्मस्थसंयतानां जीवघातो व्यवहारतो न रागद्वेषजन्यो, न वा केवलिनस्तदभावजन्यः, कषायाभावस्य जीवघातं प्रत्यकारणत्वादिति सिद्धम् । किञ्च—केवलिनो रागद्वेषाभावेऽप्यशक्यपरिहारेण यदि छद्मस्थत्वज्ञापकलिङ्गानि भवेयुः, तर्हि जीवघातादिकमधिकृत्य छद्मस्थकेवलिनोस्तौल्येऽपि छद्मस्थसंयतानामशक्यपरिहारो घात्यजीवविषयकानाभोगजन्यः । आभोगस्तु तेषामशक्यपरिहारस्य प्रतिबन्धकत्वेन जीवरक्षादिहेतुः । केवलिनस्तु घात्यजीवविषयक आभोग एवाशक्यपरिहारनिश्चयद्वारा जीवघातादिहेतुः, शेषाशेषवस्तूनामिवाशक्यपरिहारस्याऽवश्यभावित्वेन परिज्ञानादिति विशेषः । स च

---

– तिहां-पुष्ट आलंबनें-अपवादनुं सेववुं,-सो शक्तिनो अभाव तन्निमित्तक जे ज्ञानादिकनी हानि-तेहनुं प्रतिबंधक रयुं? एहवी "विचारणाई हुई । जिम विमलवाहनराजानुं हनने सुमंगल साधुनें अपुष्टालंबनें तउ शक्ति छतें पणि ज्ञानादिहानिनें अभावे पणि अहो ! ए पापरूप दुष्ट मिथ्याज मुझने उपसर्ग कर्ता ए बुद्धिज अपवादनुं सेववुं. जिम नाविकादिकनुं हणवुं धर्मरुचीने सूक्ष्मबुद्धि पर्यालोचनाई तउ नाविक अने सिंहनुं हणवुं ते पुष्टालंबने. तेहना कर्या उपसर्गने ज्ञानादिहानिना हेतुपणाथी, तें वती किहांएक पुष्टालंबन किहांएक अपुष्टलंबन, पणि ते निरालंबन नही जेणि अपवादनो अभाव हुई. तिहां आलंबनने अपुष्टपणुं ते धर्मरुचिने, ज्ञानादिकनी हानिनी प्रतिबंधक जे शकित तेहने सद्भावेज जाणिवुं पणि अपुष्टआलंबन सेवनारने तेहवोइ जे जीवघात संयम-परिणामनइ अणजावानइ हेतु पणि करी संज्वलन कषाये ऊपनो पणि अप्रशस्त कषाये ऊपनो मानिवो. अप्रशस्त कषाय तो साधुनइ अयुक्त ज छे एतलाज वती तेने जणावनार छे, अप्रशस्त-कषायनुं आगमनुं वचन जिम ' ग्युं ' एथी कष्टतर जे मूढ स्थ भई आफल्यो हुतो स्तंभनइ रीस करइ, पणि पोताना असावधानपणानइ नही,' ए वचन ते धर्मरुचि अनगार उद्देशीनइ ज कहिउं. बीजइ प्रकारइ एहवा वचननी अयुकतता थाइ. इम सम्यग् विचार करतई छद्मस्थसंयतनइ जीवघात ते व्यवहारथी रागद्वेषजन्य नहीं. अनई केवलीनइ पणि कषायने अभावे जन्य इम नहीं. कषायना अभावनइ जीवघात प्रतइ अकारणपणाथी. एहवुं सिद्ध थयुं. वली केवलीने रागद्वेषनें अभावे पणि अशकयपरीहारे करी जउ छद्मस्थपणाना ज्ञापक जे लिंग ते हुई, तउ जीवघात उद्देशीने छद्मस्थ अने केवलीने, सरिखाइ पणि छद्मस्थसंयतने अशकयपरिहार तें हंतव्यजीवविषइओ जे अनाभोग तेणें जन्य. आभोग तो तेहने "अशक्यपरिहारने" प्रतिबंधक पणि करी जीवरक्षानुं हेतु. केवलीने तो घात्य जीवविषइओ आभोग तेहज अशकयपरिहारनो निश्चय ते विचाले करी जीवघातादिकनुं हेतु. थाकता

केवल्यपेक्षया छद्मस्थसंयतानां सार्वजनीनप्रतीतिविषयशोभनत्वाभिव्यञ्जक एव । तेन तत्परिहारार्थं केवलिन इव छद्मस्थसंयतमात्रस्याऽप्याभोगजन्यं जीवघातादिकमभ्युपगन्तव्यं, परिहर्त्तव्यं वा छद्मस्थसंयतानामिव केवलिनोऽपीति प्रतिबन्दीनदी दुस्तरा । तदुत्तरणोपायश्च जिनवचनसम्यक्पर्यालोचनानावाऽऽयत्तः समीहितनगरावाप्तिहेतुः । सम्यक्पर्यालोचना तावदेवं—आभोगानाभोगघटितत्वेन प्रतिपक्षभूतसामग्रीद्वयजन्यमेकं कार्यं जीवघातादिलक्षणं न कस्यापि सम्मतम्, 'नान्यकारणकारण'मितिवचनात् । हिंसादिलक्षणया नरकगमनसामग्र्या च स्वर्गप्राप्तिप्रसक्तेः । जीवरक्षा च मोक्षकारणत्वेन केवलिनाप्यभिहिता । सा च छद्मस्थसंयतानामिव केवलिनोऽप्याभोगजन्या । आभोगश्च केवलिनस्तु सार्वदिक एव । तेन केवलिनो जीवरक्षादिकमपि तथैवाभ्युपगन्तव्यं, 'कारणानुरूपं कार्य'मिति वचनात् । यच्चोक्तं—केवलिनोऽशक्यपरिहारेण जीवघातादिकं, तदप्यसङ्गतं, अवश्यभावित्वपरिज्ञानपरिजिहीर्षयोर्विरोधादित्यग्रे दर्शयिष्यमाणत्वात् । आभोगानाभोगयोश्च क्रमेण जीवरक्षाजीवघातहेतुत्वं केवलिनैवोक्तम् । तथाहि—

'जो जीवेवि विआणेइ अजीवे वि विआणेइ । जीवाजीवे विआणंतो सो हु णाहीइ संजमं ॥१॥ तथा, जो जीवेवि ण याणेइ अजीवेवि ण याणइ । जीवाजीवे अयाणंतो कह सो णाहीइ संजमं ?' ॥१॥ त्ति दशवै० ( अ० ४, गा० १२, १३ ) न पुनः केवली जीवाजीवादीन् जानानोऽप्यसंयममेव जानातीति क्वापि विवेकेनाभिहितम् । तस्मात् छद्मस्थानां सप्तापि लिङ्गानि रागद्वेषजनितानि, केवलिनस्तु न रागद्वेषजनितानीति निषेधसूत्राभिप्रायकल्पनं प्रवचनानभिज्ञत्वाभिव्यञ्जक-

---

જે સમસ્તવસ્તુ, તેહની પરે ટાલ્યા ન ટલે જે પરિહાર, તેહને પણિ, અવશ્યભાવી, પણિ પરિજ્ઞાનથી એ વિશેષ તે તઉ કેવલીની અપેક્ષાઇ છદ્મસ્થ સંયતને, સર્વજનની પ્રતીતિવિષયના શોભનપણાનુ જ્ઞાપકજ. તે વતી ને, દોષપરિહારને અર્થે છદ્મસ્થસંયતમાત્રને પણિ જાણપણિ જન્ય જીવઘાતાદિક માનવુ. અથવા પરિહરવુ, છદ્મસ્થસંયતની પરિ કેવલિને પણિ જાણીને જીવઘાતાદિક. એ પ્રતિબંદી જે, એક વસ્તુ માનતે અવશ્ય માનવુ થાઇ તે રૂપ જે નદી તે દુસ્તર છઇ.

તે નદી ઉતરવાનો ઉપાય તો શ્રીજિનવચનરૂપ જે નાવ તેહને આયત્ત, વાછિંત નગરનુ પ્રાપ્તિ હેતુ, ભલી વિચારણા તઉ ઇમ, જાણપણુ અને અજાણપણુ એ બે યુક્ત પણિ માંહોમાંહિ વિરોધિભૂત જે બિ સામગ્રી તેણે ઊપનુ એક જીવઘાતાદિક કાર્ય તે કોઇને સંમત નહી. અન્યનુ કારણ તેહજ કારણ એહવુ વસ્તુ ન હુઇ. હિંસાદિરૂપ જે નરકગમનની સામગ્રી તેણીઇ સ્વર્ગ પામવાનો પ્રસંગ હુઇવતી, જીવરક્ષા તે મોક્ષ કારણપણિ કેવલીઇજ કહી તે તો છદ્મસ્થસંયતીનીપરે કેવલીને પણિ આભોગે ઉત્પન્ન, આભોગ તો કેવલીને સદાજ હુઈ તે વતી. કેવલીને જીવરક્ષાદિક તે આભોગજન્ય સદાએ માનવુ કારણને સરીખુ કાર્ય હુઈ એ વચનથી.

અને જે કહિઉ કેવલીને અશક્યપરિહારાદિકે જીવઘાત હુઇ, તે પણિ અયુક્ત, અવશ્યભાવિપણાનુ જ્ઞાન અને પરિહરવાની ઇચ્છા એ બિને વિરોધથી આગલિ દેખાડિસ્યે તે પણાથી, આભોગને અને અનાભોગને જીવરક્ષા અને જીવઘાતનું હેતુપણુ કેવલીઇજ કહિઉં. તે કિમ અર્થ તો બિહુગાથાનો પ્રગટજ છે. પણિ કેવલી જીવાજીવાદિપ્રતે જાણતો એ અસંયમજ જાણિ, એહવુ કિહાએ વિવેકે કહ્યુ નથી. તે માટે છદ્મસ્થનઈ સાતે લિંગ તે રાગદ્વેષઇ જનિત, અને કેવલીને તે રાગદ્વેષ જનિત નહીં, એ નિષેધસૂત્ર જે તેહના અભિપ્રાયનુ કલ્પન

मेवावसातव्यम् । अन्यथा छद्मस्थत्वज्ञापकलिङ्गाना मध्ये पञ्चमस्थाने पूजासत्कारादिसद्भावे छद्मस्थसंयतानां यथा रागद्वेषजन्यं हर्षकारित्वं, न तथा केवलिनः, किन्तु रागद्वेषाभावजन्यं वक्तव्य स्यात् । तथा सप्तमे स्थाने छद्मस्थो रागद्वेषाभ्या यथावादी तथाकर्त्ता न भवति । केवली तु रागद्वेषाभावेन यथावादी तथाकर्त्ता न भवतीति भणता अर्थात् केवली तु रागद्वेषाभ्या यथावादी तथाकर्त्ता भवतीति भणितम् । एवं च असङ्गतकल्पन कीदृशस्य प्रवचनाभिज्ञस्य युक्तमिति पर्यालोच्यम् । अथ छद्मस्थो रागद्वेषवशेन कदाचिद्यथावादी तथाकर्त्ता न भवति, केवली तु रागद्वेषाभावेन यथावादी तथाकर्त्ता भवतीत्यस्माकं मतिरिति चेत् । सत्य, इष्टापत्ते । परं तथाभूतोऽपि केवली किं सर्वकालं कदाचिद्वा ? । आद्ये, अनवद्यानि षडपि स्थानानि सर्वकाल तथाभूतान्येव भवन्तु । तथा च रागद्वेषमन्तरेणाऽपि केवलिनः कदाचिदवश्यभावित्वेन जीवघातादिक भवतीति परोक्त वचन दत्ताञ्जल्येव सम्पन्नम् । द्वितीये अर्थात् केवली कदाचिद्यथावादी तथाकारी न भवतीत्यत्र निदानमनन्यगत्या छद्मस्थसंयतानामिव केवलिनोऽपि रागद्वेषावेव, तुल्यकार्ये कारणवैषम्यासम्भवात् । तस्मान्निजमतिकल्पनमकिञ्चित्करमेवेति तात्पर्यम् । ननु भोः ! सर्वत्रापीत्थमेवेति न ब्रूमः, किन्त्वागमानाबाधया । पञ्चमं स्थानं तु लोभाविनाभावि हर्षकारित्वमिति केवलिनो विरोधेनागमबाधितमिति । एवं सप्तमस्थानमपि—

"जिअरागदोसमोहा सव्वण्णू तिअसणाहकयपूआ । अच्चतसच्चवयणा सिवगइगमणा जयंतु जिणा" ॥१॥ इति स्थानाङ्गवृत्त्यां आगमबाधितमेव । तेनैतद्द्वयं विहायान्यत्र यथोक्तमवसातव्यमिति

---

ते प्रवचनना अजाणपणानुं जणावनारज जाणवुं' इम न मानीइ तो छद्मस्थपणानु ज्ञापक जे लिंग ते मध्ये पाचमे स्थानकें पूजासत्कारादिक छते छद्मस्थयतीने जिम रागद्वेषे ऊपनु हर्षकारीपणु तिम केवलीनई नहीं. तो स्युं, रागद्वेषने अभावइ जन्य, एहवु कहवुं हुई, वली सातमे स्थानकई छद्मस्थने रागद्वेषे यथावादी-जेहवुं बोले तेहवुं करेनार न हुई, अने केवली तउ रागद्वेषने अभावे जेहवुं बोलइ तेहवुं करे नहीं एहवु कहेते परमार्थथी केवली रागद्वेषइ जेहवु बोले तेहवु पाले एहवु कहिउं. इम ए असगतकल्पन केहवा प्रवचनना अजाणने युक्त, ए विचारवु.

हिवे छद्मस्थ ते रागद्वेषने वशी किवारेकि यथावादी तिम करनार न हुई, केवली तो रागद्वेषने अभावई जेहवु बोले, तेहवु करई, एहवी अम्हारो मति, एहवु जउ कहिस्ये, तउ सत्य वांछितनी प्राप्तिथी, पणि तेहवो ए केवली स्यु सर्वदा कि किवारेकि ? प्रथम पक्षे, बीजा ए स्थानक पणि निरवद्य सर्वकाल तेहवाज हउ. तिवारे, तो रागद्वेष विना केवलीनई किवारेकि, अवश्य भाविपणि जीवघातादिक हुइ, एहवु परनु कहिउं वचन ते हाथि पाणी दीधु एहवु थयु । बीजा पक्षइ तो केवली किवारेकि जेहवु बोले तेहवु न करे. इहां कारण तो बीजी गति नहीं तेणि करी छद्मस्थयतीनी परे केवलीने पणि रागद्वेष ज. सरीखे कार्ये कारणना विभिन्न पणाना असंभवथी. ते माटे आपमतिनु विकल्पन ते अकिंचित्करज. ए परमार्थ. पूछे छे—सर्वत्र पणि इमज नथी कहेता. तो स्यु ? आगमना अनाबाधाई पाचमु स्थानक तो लोभविना अणुथातुं एहवुं जे हर्षकारीपणु ते केवलीने विरोधे करी आगमबाधित छे. इम सातमु स्थानक पणि जीत्या छे रागद्वेषमोह जेणि, सर्वज्ञ, इंद्रि करी छे पूजा जेहनी, अत्यंत छे सत्यवचन जेहनु, शिवगतिने विषे गमन जेहने एहवा जिन सर्वोत्कर्षे वर्त्तउ' ए ठाणाग वृत्ति रूप आगमे बाधितज. ते वती ए बि-पांचमु अने सातमु स्थानक मूकीनइ बीजे ठेकाणे कहिउं ते

चेत् । सत्यं, तर्हि केवलिनो जीवघातादिकं कथमपि न सिद्ध्येत् । 'केवली णो इमं सावज्जंति पन्नवेत्ता पडिसेवित्ता हवइ, जहावाई तहाकारी आवि हवइ' इत्याद्यागमेन बाधितत्वात् । द्रव्यतोऽपि जीवघातादेः सावद्यत्वं च तद्विषयकप्रत्याख्यानानुपपत्त्या निश्चयतः कर्मबन्धहेतुत्वाभावेऽपि व्यवहारतः प्रायश्चित्तप्रतिपत्त्यनुपपत्त्या च प्रतीतमेव । किञ्च-केवलिनो रागद्वेषाभावेऽप्यवश्यभावित्वेन प्राणातिपातादीनि सप्तापि स्थानानि भवन्तीति वचनं केवली यथावादी तथाकर्त्ता भवतीति भणता भवतैवोन्मत्तप्रलापकल्पमुद्घोषितम्, एकान्तसत्यवादिनः कृतप्रतिज्ञाभङ्गस्यात्यन्तासत्त्वात् । तस्माद् यट्टीकाकारेण छद्मस्थत्वज्ञापकलिङ्गेषु कदाचिदिति विशेषणमुपात्तं तत्सप्तानामपि लिङ्गानां स्वरूपासिद्धिनिवारणार्थम् । यच्च केवलित्वज्ञापकलिङ्गेषु 'कदाचिदपि' इतिशब्दद्वयात्मकं विशिष्टं विशेषणं तत् छद्मस्थसाधौ व्यभिचारवारणार्थमेव ।

अयं भावः—विप्रतिपन्नः साधुश्छद्मस्थो जीवघातकत्वात् अनृतभाषकत्वादित्यादिप्रयोगेषु प्राणातिपातादीनि सप्तापि लिङ्गानि छद्मस्थसाधौ न भवन्ति, सर्वकालमनवरत जीवघातादौ प्रवर्त्तमानस्य संयतस्यासंयतस्य वा असम्भवात् । व्याधादेरपि सिद्धे प्रयोजने भोजनादेरिव ततो निवृत्तेरध्यक्षसिद्धत्वात् । तेन सामान्यतः प्राणातिपातादिकं छद्मस्थसाधौ नास्त्येवेति स्वरूपासिद्धिः । तन्निवारणं च कदाचिदिति विशेषणेन सम्पन्नम् । तथा केवलित्वज्ञापकलिङ्गानि छद्मस्थसाधौ व्यभिचरन्ति, कदाचित्प्राणातिपाताद्यभावावस्थायां हेतुषु विद्यमानेषु केवलित्वाभावात्, कदाचिज्जीवघातादिनिषेधस्योभयवादिसम्मतत्वात् । तन्निवारणार्थं कदाचिदपीति विशिष्टं विशेषणम् । तेन विशिष्टविशेषणविशिष्टानि लिङ्गानि छद्मस्थसाधौ

---

જાણવું. એહવું જો કહિઈ, તે સત્ય, તઉ તો કેવલીને જીવઘાતાદિક કિમે સિદ્ધ ન થાઈ. કેવલી એ સાવદ્ય એહવું કહિ પ્રતિસેવે નહી. જેહવું બોલે તેહવું પાલે, ઇત્યાદિક આગમઇં બાધિતપણાથી, દ્રવ્યથી એ જીવઘાતાદિકને સાવદ્યપણું તો પચ્ચખ્ખાણની અન્યથા અયુક્તતા થાઇ વતી નિશ્ચયથી કર્મબંધહેતુપણાને અભાવે પણિ વ્યવહારથી પ્રાયશ્ચિત્તનું પડિવજવું તેહની અયુક્તતા વલી પ્રસિદ્ધજ.

અતએવ ભદ્રર્ષિ વ્યાપાદક સાધુને વારંવાર ક્ષુલ્લકે સભાર્યું. હિવે કુણેક ઉચ્છૃંખલ કહે છે જે. કેવલીને પણિ દ્રવ્યથી ઉપકરણ તે પરિગ્રહ જિમ દોષ નહિ તિમ દ્રવ્યથી પ્રાણાતિપાતાદિક પણિ દોષ નહી. તે મિથ્યા જાણિવું. હર્ષકારિ ધર્મોપકરણનઇં દ્રવ્યથી પરિગ્રહ કહયો છઇં, अपरिग्गहिआ सुत्तेत्ति ઇત્યાદિ ભાષ્યાભિપ્રાયે જાણિવું. સમતિ ને વિષે પણિ ધર્મોપકરણ તે પરિગ્રહ નિષેધ્યો છે. અને ગ્રંથાંતરાભિપ્રાય સમઝયા વિના યથા તથા કહિઇ તો શ્રીકેવલીને ભોગ માન્યો જોઇઇ. તે વિચારવું વલી 'દ્રવ્યજીવવધાદિક તે નિંદાવિષય નહિ' એ લિખન તે પણિ પૂર્વોક્ત યુક્તિ મિથ્યા જાણિવું. વળી કેવલીને રાગદ્વેષને અભાવે પણિ અવશ્યભાવિ પણિ પ્રાણાતિપાતાદિક સાતે સ્થાનક હુઇ એહવું વચન તે 'કેવલી જેહવું બોલે તેહવું પાલે', એહવું કહે તે તેજ ઉન્મત્તપ્રલાપ સરીખું સભલાવ્યું એકાંતે સત્યવાદીને કીધી પ્રતિજ્ઞાના ભંગનઇં અત્યંત અસત્યપણાથી. તે માટે જે ટીકાકારે છદ્મસ્થપણાના જ્ઞાપક લિંગને વિષે કિવારેક, જે એહવું વિશેષણ જે ગ્રહ્યું તે સાતે લિંગને સ્વરૂપાસિદ્ધિ-જે પક્ષને વિષે હેતુ ન હુઇ, તે વારવાને અર્થે. અને જે કેવલીપણાના જ્ઞાપક લિંગને વિષે 'કિવારે' 'પણિ' એહવું શબ્દદ્વયરૂપ વિશિષ્ટવિશેષણ તે છદ્મસ્થસાધુનઇં વિષે જે વસ્તુ સાધીઇ તેહનો અભાવ જિહાં હુઇ તિહાં હેતુ વર્તે તે વ્યભિચારને

न सम्भवन्त्येवेति व्यभिचाराभावः । न हि छद्मस्थसयतः कदाचिदपि जीवघातको न भवतीति वक्तु शक्यते । अध्यक्षबाधात्, 'अणगारस्स ण भते !' इत्याद्युपदर्शितागमबाधाच्च । किञ्च–अपिशब्द-मन्तरेण केवलिनो बहुकाले जीवघातप्रसक्तौ छद्मस्थापेक्षया केवलिनो निकृष्टतरता स्यादिति विशेषणद्वयस्य सार्थकता । अत एव केवली स्नातक इत्युच्यते, कदाचिदपि सम्भावनयाऽपि जीवघातादिकलङ्कापगमात् । अन्यथा नियताभोगजन्यजीवघातादिनैव केवलिनः स्नातकत्वं प्रसज्येत, अपरस्य तत्कारणस्याभावात् । तेन साक्षाज्जीवघाताद्यभावेऽपि क्षीणमोहस्य स्नातकचारित्राभावोऽनाभोगजन्यसम्भावनया दोषकलङ्काद्देवावसातव्यः । न च सूत्रानुक्तेरुक्तिरयुक्तेति शङ्कनीयं, " सूत्र सूचनकृदि"तिवचनात् । यथाश्रुतसूत्रस्यानुपपत्तौ तदुपपत्तिसम्पत्तयेऽध्याहारोपचारादिना व्याख्यानस्य सर्वसम्मतत्वात् ।" तथा च भाष्यकारोऽपि—

'जा सम्मभाविआओ पडिमा इअरा न भावगामो उ । जइ भावो णत्थि तहिं णणु कारणकज्जउवयारो ॥१॥ त्ति, बृहत्कल्पभाष्ये ( गा० ११११६ ) इह प्रतिमाया भावग्रामत्वमुपचारेणैव समर्थितम् । एव पुस्तकादावपि ज्ञानत्व मन्तव्यम् । यतः प्रतिमाया दर्शनहेतुत्ववत् पुस्तकस्यापि ज्ञानहेतुत्वम् । अन्यथाऽनुयोगस्य वैयर्थ्यमापद्यत । यदुक्तम्—

'ज जह सुत्ते भणिय तहेव जइ तव्विआलणा णत्थि । किं कालिआणुजोगो दिट्ठो दिट्ठिप्पहाणेहिं ?' ॥१॥ इति प्रागुपदर्शितम् । अत एव केवलसूत्रवादी मिथ्यादृष्टिरित्यभिधीयते । यदागमः—'अपरिच्छिअसुअणिहसस्स' इत्यादि प्रागुपदर्शितम् । अज्ञान च मिथ्यात्वाविनाभूतमिति गाथार्थः ॥९॥

---

वारवाने अर्थंइज. ए भाव विवादनु स्थानक ए साधु ते छद्मस्थ जीववधकपणाथिकु, मिथ्याभाषकपणाथिकु, ए इत्यादिक प्रयोगनइं विषइं प्राणातिपातादि सांत लिंग ते छद्मस्थ साधुने विषइं नथी. सर्वदा निरतर जीवधातादिकने विषे प्रवर्तता सयत अथवा असयत तेहने असभवथी, व्याधादिकने पणि प्रयोजन सिद्ध थए भोजनादिकने जिम तेथी निवर्तिवे, प्रत्यक्षसिद्धपणाथी, तेवती सामान्यथी प्राणातिपातादिक छद्मस्थसाधुने विषे नथीज, एवनी स्वरूपासिद्धि तेहनु निवारवु ता कदाचित् ए विशेषणे थयु.

तिम वथी छद्मस्थपणानो ज्ञापकलिंग ते छद्मस्थसाधुनइ विषे व्यभिचरइ, किवारेकि प्राणातिपातादिकनी अभावावस्थाईं हेतु छते केवलीपणाना अभावथी, किवारेकि जीवघातादिनिषेधनइं उभयवादिसमतपणाथी ते निवारवानइं, किवारइंपणि' एहनु विशिष्टविशेषण. तेवती विशेषणयुक्त जे विशेषण तेणि युक्तलिंग ते छद्मस्थ साधुनइं विषे न हुईज, एवती व्यभिचारदूषणनो अभाव. छद्मस्थयती किवारे कि पणि जीववधक न हुई, एहवु तउ कही सकीइं नही. प्रत्यक्षबाधथी. 'अणगारने भगवत', इत्यादिक पूर्वे देखाड्यो जे आगम तेहना बाधथी वली, वली अपिशब्दविना केवलीनइं बहुकाल जीवहिंसानी प्रसंगथाते छद्मस्थनी अपेक्षाइं केवलीने हीनपणु थाई एवती विशेषणने सार्थकपणु. एतलाजवती केवली स्नातक कहीइ छइ. किवारिपणि सभावनाइ पणि जीवघातादि कलकना अणुथावाथी, एम न मानीइ तो निश्चयथी आभोगइं जन्य जे जीवघातादिक तेणिज करी केवलीने स्नातकपणु हुइ बीजा कारणना अभावथी, ते वती साक्षात् जीवघातादिकने अभावे पणि क्षीणमोहने स्नातकचारित्रनो अभाव, ते अनाभोगे जन्य जे सभावना तेणि करी दोषरूप कलकथीज जाणिवो 'सूत्रनइं अणुकह्याथी कही युक्ति ते अयुक्त' एहवु न शकवु. 'सूत्र ते सूचना करनार' एहवा वचनथी. यथाश्रुत जे सूत्र तेहनी युक्तना

अथ द्वयोरपि केवलिनोः स्वरूपमधिकृत्य भेदमाह—

॥ पढमो खलु सव्वन्नू बीओ पुण खीणमोहओ होइ । जइवि अणाभोगो से विहलो मोहस्स विरहेण ॥१०॥

व्याख्या—प्रथमः केवली सर्वज्ञः-सर्ववस्तुविषयकसाक्षात्कारसंयुक्तः । खलुरवधारणे । सर्वज्ञ एव । द्वितीयः-पुनः क्षीणमोहकः । क्षीणो-निस्सत्ताकीभूतो मोहो-मोहनीयं कर्म-यस्येति क्षीणमोहकः । यद्वा द्वितीयः कुतः ?, क्षीणमोहतः-क्षीणमोहमात्रेण केवली भवति । यद्यपि 'से' तस्य द्वितीयकेवलिनोऽनाभोगोऽस्त्येवेति क्रिया गम्या, तथापि निष्फलः-फलशून्यः । फलं च-प्रकृतेऽनाभोगस्य सहकारिकारणत्वेन जीवघातादिकमेव, तेन रहितः । तत्र हेतुमाह-मोहस्य विरहेण-मोहनीयाभावेन, अनाभोगस्य सहकारिकारणत्वाभावात् । छद्मस्थसंयतानां चारित्रमोहनीयोदयेन जीवघातानृतभाषणाद्याश्रवमात्रे जनयितव्ये अनाभोगः सहकारिकारण भवति, सत्यपि मोहनीये घात्यजीवविषयकाभोगवतः संयतस्य विनाऽपवाद जीवघाताद्यसम्भवात् । मोहनीयाभावे च सहकारित्वमनाभोगस्योच्यते ?, सहकार्यस्य मोहनीयस्याभावात् । किञ्च-आस्तां ज्ञानावरणीयोदयरूपोऽनाभोगो दूरे, आश्रवहेतुकर्मक्षयोऽपि मोहनीयाभावे नि ०ो भवति । यथा क्षीणेऽप्युपभोगान्तराये वेदमोहनीयोदयाभावेन नाङ्गनाद्युपभोगो भवति । अत एव सर्वेषामपि कर्मणां सत्त्वेनासत्त्वेन वा आश्रवजनकत्वेन फलवत्त्वं मोहनीयायत्तमेव, सर्वेषामपि णां मध्ये मोहनीयस्यैव प्रधानत्वात् । यतो मोहनीयक्षये सर्वाण्यपि कर्माणि क्षीयन्ते । यदुक्तम्—

---

अणुछतें ते सूत्रनी युक्तपणाइं उपजाववाने अर्थे अध्याहार. जे काइएक बाहिरथी शब्दनुं लेवु उपचार. जे-लाक्षणिकार्थ तेणिं करी व्याख्यानने सर्व सम्मतपणाथी.

ते माटे ज कुणेके उपचार ते अकिंचित्कर एहवु कहिउ छे. ते मिथ्या जाणिवु. भाष्यकारपणिं ए युक्तिने विषे साक्षिक छे 'जे सम्यग् भावित प्रतिमा अंतर न ते भावग्राम. जउ नथी भाव तिहा तउ स्युं ? कारणने कार्यनउ उपचार करिवओ. ए बृहत् भाष्यने विषे छे. इहा प्रतिमाने भावग्रामपणुं ते उपचारे ज समर्थ्यु छे. इम पुस्तकादिकने विषे पणि ज्ञानपणुं मानवु. जे कारणथी प्रतिमाने दर्शनना हेतुपणानी परे पुस्तकने ज्ञाननुं हेतुपणु इम न मानीइ तउ व्याख्याननुं व्यर्थपणुं थाइ. ए गाथानु व्याख्यान पूर्वे देखाड्युं छे एतलाज वती केवलसूत्रवादी, ते मिथ्यात्वी कहीई छे. ए गाथा तुया एहनो अर्थ पूर्वि कहिउ छे. अज्ञान तओ मिथ्यात्वविना न हुई. ए गाथानो अर्थः-॥९॥

हिवे बिहु केवली सयोगी अने क्षीणमोह तेहनुं स्वरूप आश्रयीने भेद कहे छे.

प्रथम केवली तउ सर्वज्ञ. बीजउ केवली तउ विशेष्यो क्षीणमोह. यद्यपि अनाभोग ते क्षीणमोहमे छे, पणि विफल. मोहना विरहे वती. (१०)

अर्थ :—प्रथम केवली तउ सर्ववस्तुविषयओ जे साक्षात्कार-साक्षात् ज्ञान तेणि सहित. खलु ते निश्चयनो अर्थ बोले. एतले सर्वज्ञ ज. बीजो ते क्षीणमोह-क्षय थयो छे सत्तारहित थयो छे मोह जेहने एहवो, अथवा बीजो कुण हेतुथी ? क्षीणमोहथी क्षीणमोहमात्रे हुइ. यद्यपि तेह केवलीने अनाभोग छे. इहा अस्ति एतली क्रिया ते उपरथी लीजइ, तउ हे फल शून्य छे, फल ते अनाभोगने सहकारिकारणपणि जीवघातादिक ज, तेणि रहित तिहा कारण कहे छे-मोहने अभावे अनाभोगने सहकारि कारणपणानी अभावथी, छद्मस्थसंयतीने चारित्रमोहनीयने उदये जीवघात-मृषाभाषण इत्याद्याश्रवमात्र नीपजावते अनाभोग ते सहकारिकारण हुइ. मोहनीय छते पणि हिंसनीय जीवविषयीओ जे आभोगवंते यत सयतने

॥ " मस्तकसूचिविनाशात् तालस्य यथा ध्रुवो भवति नाशः । तद्वत् कर्मविनाशोऽपि मोहनीये क्षयं गते ॥ ॥ इति प्रशमरतौ ( श्लो० २६६ ) एतेन केवलकायिकयोगजन्योऽपि द्रव्यतो जीवघातो भविष्यतीति शङ्काऽपि परास्ता, तथाभूतजीवघातस्याऽऽश्रवरूपत्वात् । तथाभूतोऽपि जीवघातो यदि केवलयोगजन्यो भवेत् तर्हि अब्रह्मसेवापि तथा वक्तव्या प्रसज्येत, कायिकयोगस्य तत्रापि कारणत्वात् । यस्तु केवलयोगप्रत्ययः कर्मबन्धः, स चेह कस्यापि कर्मणः फलवत्त्वेन न विवक्षितः, स्थितिहेतुकषायाभावेन ज्ञानादिदूषणत्वाभावात् । तेन कषायसंयुक्ता एव योगाः फलवत्कर्मबन्धहेतवो भवन्तीति तात्पर्यमिति गाथार्थः ॥१०॥

अथ कादाचित्कस्य प्राणातिपातादेः परिज्ञानं परीक्षणीयेन संयतेन बहुकालमप्रमत्ततया सहावस्थानेनैव स्यात् । तच्चासम्भवीति कथं सप्तापि लिङ्गानि लिङ्गिनः परिज्ञानाय हेतवो भवन्ति ? इति पराशङ्कामपाकर्तुमाह—

॥ छउमत्थो तेवि दुवे जाणइ लिंगेण लिंगविण्णाणं । पच्चक्खपरोक्खेहिं दोहिं पमाणेहिं विण्णेअं ॥११

व्याख्या—छद्मस्थः परीक्षकः । स च संयतो गृहस्थो वा 'ते वि दुवे' त्ति, छद्मस्थकेवलिनौ द्वावपि परीक्षणीयौ लिङ्गेन जानाति । लिङ्गं च ज्ञातमेवानुमितिजनकम् । अत आह—लिङ्गविज्ञानं-लिङ्गस्य प्राणातिपातादेर्विशिष्टं व्यभिचारादिदोषराहित्येन ज्ञान-बोधो विज्ञानं, काभ्यां ? प्रत्यक्षपरोक्षाभ्यां प्रमाणाभ्यां विज्ञेयं, न पुनः प्रत्यक्षेणैवेति गाथार्थः ॥ ११ ॥

अथ प्रत्यक्षपरोक्षयोर्विवेकमाह—

---

अपवादविना जीवघातादिकना असंभवथी. मोहनीयने अभावे तेहनुं सहकारिपणु अनाभोगने कदी संघाते आश्रयवा योग्य जे मोहनीय तेहना अभावथी.

वली रह्यो ज्ञानावरणीयना उदयरूप ते अनाभोग ते दूर, आश्रवनो हेतु जे कर्म तेहनो क्षयप मोहनीयने अभावे निष्फल, जिम क्षीणे उपभोगांतराये वेदमोहनीयना उदयने अभावे अंगनादि उपभोग न हुइ. एतलाजवती सर्वइ कर्मने छतें अणुछतइ अथवा आश्रवजनकपणे सफलपणु मोहनीयने आयत्तेज, सर्वकर्मने मध्ये मोहनीयनेज प्रधानपणाथी. जे माटे मोहनीयने क्षये कर्म क्षय पामे; 'मस्तकनी सूचिना विनाशथी तालवृक्षनो जिम हुइ निश्चये नाश, तिम कर्मनो विनाशप मोहनीयने क्षयि हुइ' ए प्रशमरतिने विषे कह्यु छे. एतले केवल कायिकयोगे जन्यपणि द्र जीवघात हुस्ये एहवी शंकापणि टाली. तेहवा जीवघातने पणि आश्रवरूपपणाथी तेहवो जीवघातप जेउ केवलीमा योगथी जन्य हुइ, तउ अब्रह्मसेवा पणि तिम कहेवो थाइ, कायिकादियोगने तिहां कारणपणाथी, अने जे केवल कायियोगनिमित्तक कर्मबंध ते इहां कोइ कर्मने फलवंत पणि विवक्ष्यो न स्थितिहेतुकषायनो अभावे करी ज्ञानादिकना दूषणपणानी अभावथी तेणे करी कषायसंयुक्तज यो फलवंत कर्मबंधना हेतु हुइ ए तात्पर्य. एतलो ए गाथानो अर्थ ॥१०॥

हिवे किवारेक थाता जे प्राणातिपातादिक तेहनु परिज्ञान ते परीक्षा करिवा ये साधु ते स बहुकाल अप्रमत्तपणे रहे तेज करी हुइ. ते तो संभवे नहीं, तउ किम सात लिंग ते लिंगी जे साध आश्रय, तेहना परिज्ञानने अर्थि-हेतु हुइ, एहवी परनी आशंका टालवाने कहे छे.

॥ इंदिययं पच्चक्खं परोक्खमणुमाणमाइअं होइ । अणुमाणं पुण मिच्छाकारप्पमुहेहिं लिंगेहिं॥१२॥

व्याख्या— इन्द्रियाणि-चक्षुरादीनि, तेभ्यो जातमिन्द्रियजम् । यद्यप्यवध्यादिज्ञानत्रयं प्रत्यक्षमेव तथापि प्रकृते तदनुपयोगादनुपादानम् । अवध्यादिमतां हि प्रायो लिङ्गेन, लिङ्गिनो ज्ञानाभावात्, लिङ्गवल्लिङ्गिनोऽपि प्रायः प्रत्यक्षत्वात् । केवलिनस्तु सर्वथा लिङ्गानुपयोगात् । पुन शब्दो गम्यः । परोक्षं पुनरनुमानादिकम् । आदिशब्दात् शब्दोपमानादिसङ्ग्रहः । तत्सर्वं परोक्षमेव । तत्र प्राणातिपातादिलिङ्गपरिज्ञानाय अनुमानप्रयोगेषु लिङ्गानि मिथ्याकारादीनि–मिथ्याकारतदर्थाभिव्यञ्जकवाक्प्रयोगादीनि । तेषां च ज्ञानं प्रत्यक्षेण शब्देन वा स्यात् । तेन स जीवघातो न केवलं चक्षुरादिगम्य एव लिङ्गं भवितुमर्हति । किन्तु मिथ्याकारादिलिङ्गगम्योऽपि ।

तच्चैवम्–अयं साधुः साक्षात संभावनया वा प्राणातिपातादिप्रतिषेवितैव, मिथ्याकारान्यथाऽनुपपत्तेः अस्मदादिवदित्येवं लिङ्गगम्येन प्राणातिपातादिलिङ्गेन छद्मस्थोऽयं संयत इत्येवं निश्चिनोति । मिथ्याकारोऽपि यावत्कालं व्रतप्रतिपत्तिस्तावतकाल पुनरकरणाभिप्रायेण प्राणातिपातादेरुपरतस्यैव स्यात्, अनुपरते च मिथ्याकारासम्भवात् । तत्र कुम्भकारक्षुल्लकदृष्टान्तः प्रवचने प्रतीत एव । उपरमे च प्राणातिपातादेः कादाचित्कत्वमेव सिद्ध्यति । सार्वदिके च प्राणातिपातादौ आत्मीयसाक्षात्काराभावेऽपि केवलिवचसा निर्णीते मिथ्याकारो दूरे, व्रतग्रहणावसरेऽपि तत्प्रतिषेवणापरिणतपरिणामस्य तद्भङ्गबुद्धिमत्त्वेन व्रतग्रहणस्योपहास्यरूपतापत्तेः । एतेन प्राणातिपातो हि द्विविधः–सार्वदिकः कादाचित्कश्च । प्रत्याख्यानं च

---

छद्मस्थ ते ते बिहुने जाणि लिगे करी, लिंगनु ज्ञान ते प्रत्यक्ष अने परोक्ष ए बि प्रमाणि जाणिवुं.

वृत्त्यर्थ. छद्मस्थ परीक्षानो करनार ते संयत अथवा गृहस्थ ते बिहु छद्मस्थ अने केवलि ते बिहु परोक्षा करिवा योग्य एहवा प्रति लिंगइ–चिह्ने करी जाणे. लिंग ते जाणयुज अनुमितिनु–साध्यना ज्ञाननु जनक, ते किम कहइ छइ–लिंग जे प्राणातिपातादिक तेहनु व्यभिचारादिक जे हेतुना दोष ते रहित पणि ज्ञान ते विज्ञान. स्ये करीने ?, प्रत्यक्ष अने परोक्ष, ए बि प्रमाणे जाणवुं. पणि प्रत्यक्षे ज नहीं. ए गाथानो अर्थ: ॥ ११ ॥

हवइ "प्रत्यक्षपरोक्ष" ज्ञाननो विवेक कहई छे—

इंद्रियजन्य ते प्रत्यक्ष, परोक्ष ते अनुमानादिक हुई. अनुमान जे लिंगज्ञान पणि मिथ्याकारप्रमुखलिंगे करी जाणिवुं. गाथार्थ ।

वृत्त्यर्थ—इंद्रिय ते चक्षुरादिक तेथी उपनु ते इंद्रियज, ते प्रत्यक्ष. जउई अवध्यादिज्ञान त्रिणि पणि, प्रत्यक्षज, तउहे इहा तेहना अनुपयोगथी. तेहनु ग्रहिवु न करिवु: अवधिज्ञानादिकवंतने प्राहे लिंगे करी साध्यज्ञानना अभावथी, लिंगनी परे साध्यने पणि प्राये प्रत्यक्षपणाथी. केवलीने तो सर्वथा लिगना अनुपयोगथी. पुन शब्द ते बाहिरथी लेवो. परोक्ष ते अनुमानादिक, आदिशब्दथी उपमानादिकनो संग्रह, ते सर्व परोक्षज. तिहा प्राणातिपातादिक जे लिग, तेहनी परिज्ञानने अर्थि अनुमानना प्रयोगने अर्थि मिच्छामि दुक्कडना अर्थना जणावनार वचनना प्रयोग ते आदि, तेहनुं ज्ञान ते प्रत्यक्षे अथवा शब्दे हुई, तिणे करी ते जीवघात ते केवल चक्षुरादिके ज जाणीई इम नहीं. लिंग थावाने योग्य तो शुं ? मिथ्याकारादिके गम्य पणि,

कादाचित्कस्यैव भवति, न पुनः सार्वदिकस्यापीति भ्रान्तिरपि निरस्ता । सर्वेषामपि देशविरतत्वापत्त्या सर्वविरतेरुच्छेदापत्तेः आगमबाधापत्तेश्च । आगमे च प्रथममहाव्रत सर्वजीवविषयक भणित, तथाहि—

पढमंमि सव्वजीवा बीए चरिमे अ सव्वदव्वाइ । सेसा महव्वया खलु तदेक्कदेसेण दव्वाण ' ॥१॥ ति, श्री आचा० नि० ( गा० १५ ) तस्मात् पृथिव्यादिसम्बन्धी प्राणातिपातः सर्वेषामपि जीवाना निजव्यापारसाध्य' सम्भवन् ( साध्यासम्भवात् ) कादाचित्क एव भवति, साक्षादवगमाभावेऽपि केवलिवचसैव तथाश्रद्धानात् । तद्वचन च प्रागुपदर्शितमेव । अन्यथा सर्वविरतिपरिणामानुपपत्तेः , प्रतिसमयमनवरत जीवघातो भवत्येवेत्यभिप्रायस्य तत्प्रतिबन्धकत्वात् । सार्वदिके च जीवघाते प्रत्याख्यानाभावस्य तवापि सम्मतत्वात् । प्रत्याख्यान च ' सव्व भते ! पाणाइवायं पच्चक्खामी ' त्यादिरूपेण भणितमिति पर्यालोच्यम् । एव च प्रसङ्गागतमभिधाय प्रकृतमुच्यते—एवमाप्तोपदेशादपि जीवघातादिकं लिङ्गमवगम्य छद्मस्थत्वनिर्णयो भवति । स चाऽऽप्तोऽन्य इव स्वय छद्मस्थोऽपि भवति । यथा कश्चित् साधुर्भणति— अमुकप्रदेशे मम पादस्याधः सहसाऽमुको जीवो व्यापन्न इत्यादिवचनैर्वक्तर्य्येव छद्मस्थत्व श्रोता निश्चिनोति । छद्मस्थत्वज्ञापकप्राणातिपातादिलिङ्गकलितत्वेनावगमात् । एव मृषावादादिष्वपि भाव्यम् ।

ननु भोः ! सुहृद्भावेन पृच्छाम —प्राणातिपातादीना सप्तानामपि लिङ्गाना क्रमेण यौगपद्येन वाऽनवरत सर्वकालीनत्वासम्भवेन विवक्षितपरीक्षाकाले कथमुभयोः सम्यग् निर्णय ? इति चेत् । सत्यम् । तत्र छद्मस्थत्वज्ञापकलिङ्गाना सप्तानामपि मोहनीयकर्मजन्यत्वेन परस्परानुविद्धाना स्वरूपयोग्यतया

---

તો કેમ—એ સાધુ તે પ્રકટ અથવા સભાવનાઇ પ્રાણુાતિપાતાદિકનો સેવનારજ. મિચ્છામિદુક્કડાની અન્યથા અયુક્તતાથી. અમ્હારી પરિ ઇત્યાદિલિગે જાણુવા યોગ્ય એહવા જે પ્રાણુાતિપાતાદિક લિગ તેણે કરી ' એ સાધુ તે છદ્મસ્થ ' એહવો નિશ્ચય કરઇ, મિથ્યાકારપણિ યાવત્કાલતાઈ વ્રતની પ્રતિપત્તિ—પડિવજવુ તિહાતાઈ ફિરી અણુકારિવાને અભિપ્રાયે પ્રાણુાતિપાતાદિકથી નિવર્ત્યાને જ હુઈ અણુનિવર્તિ મિચ્છામિ દુક્કડાના અસભવથી તિહા કુભકારઇ ઉપલક્ષિત ક્ષુલ્લકનો દૃષ્ટાત પ્રવચનને વિષે પ્રસિદ્ધજ. નિવર્ત્તઇ હુતે તો પ્રાણુાતિપાતાદિકનુ કદાચિત્ ઉપજવાપણું સિદ્ધ થાઈ સાર્વદિક તો પ્રાણુાતિપાત છતે પોતાના પ્રકટજ્ઞાનને અભાવે પણિ કેવલિવચનિ નિશ્ચિત થઇ મિથ્યાકાર તો વેગલો, વ્રતગ્રહણુને અવસરિં પણિ તેહની સેવનાઈ ભાવિતપરિણામને તેહના ભગની બુદ્ધિવત પણિં કરી વ્રતગ્રહણુને ઉપહાસભૂતપણાઇની આપત્તિ પ્રસગ થાઇ વતી.

એતલે પ્રાણુાતિપાત તે બિ પ્રકારે—સર્વદા થાઈ એહવો અને કદાચિત્ હુઈ એહવો પ્રત્યાખ્યાન તે કિવારે કિ જીવઘાત હુઈ એહવાનુજ હુઈ પણિ સર્વદા થાઈ તેહવુ ન હુઈ. એ ભ્રાતિ પણિ ટાલી. સર્વને દેશવિરતિપણાઇના પ્રસગથી, સર્વવિરતિને ઉચ્છેદની આપત્તિથી, સિદ્ધાતની બાધાની આપત્તિથી આગમને વિષે તો પહિલુ મહાવ્રત તે સર્વ જીવવિષયક કહિઉ છે તે કિમ—પહિલે વ્રતે સર્વ જીવ પચ્ચખ્યા હુઇ બીજે અને છેહલે વ્રતે સર્વ દ્રવ્ય પચ્ચખ્યા હુઈ શેષ મહાવ્રત તે એક દેશે દ્રવ્યવિષઇઆ હુઈ એ આવ નિ. નુ વચન **तस्मात्** પૃથિવ્યાદિક સબધિ પ્રાણુાતિપાત તે સર્વે જીવને વ્યાપારે સાધ્ય એહવો સભવતો કેવારે કે જે હુઈ. સાક્ષાત્ જ્ઞાનને અભાવે પણિ કેવલીને વચનેજ તેહવી શ્રદ્ધાનથી તે વચન તો પૂર્વે દેખાડયુ

स्यात् जीवघातवर्जनेन जिनाज्ञायाः परिपालनात्। केवलिनस्तु सप्तापि स्थानानि मोहनीयक्षयजन्यत्वेन ततो विलक्षणानि मिथ्याकाराद्युक्तव्यापारराहित्येन अभिव्यञ्जितानि सर्वकाल केवलित्वगमकानि सुलभान्येव। नहि केवली कदाचिदपि मिथ्याकाराद्युक्तव्यापारवान् भवति, सम्भावितजीवघातादिलक्षणकारणाभावात्। नन्वेव लिङ्गानां निरूपण व्यर्थमेव, भवान् केवली उत छद्मस्थ ? इति प्रश्ननिर्वचनाभ्यामेव निर्णयसम्भवादिति चेत्। मैव, परीक्षणीयपरीक्षकयोरन्यतरस्य मूकत्वे देशकालादिव्यवहितत्वे वक्तुर्वचस्यविश्वासे च लिङ्गैरेव तन्निर्णयसम्भवादिति गाथार्थः ॥ १२ ॥

अथ केवलित्वगमकानि सप्तापि लिङ्गानि केवलिनः सर्वांशेराश्रवाभावे सिद्धे सत्येव सम्यग भवन्ति, तेन सर्वथाश्रवाभाव दृष्टान्तेन समर्थयन्नाह—

॥ णाणावरणाभावे लेसो दोसस्स णेव णाणस्स। जह तह चरित्तमोहाभावा दोसो ण चरणस्स ॥१३॥

व्याख्या–ज्ञानावरणाभावे–ज्ञानावरणीयकर्मक्षये सति, ज्ञानस्य दोपः–सशयविपर्ययादिलक्षण', तस्य लेशोऽपिगम्यः, लेशोऽपि–छायामात्ररूपोऽपि नैव–न भवेदेवेत्यर्थः। यथेति दृष्टान्तोपन्यासे। तथा चारित्रमोहाभावात् चरणस्य–चारित्रस्य, दोपो–दोपलेशोऽपि न भवेत्। स च दोपः प्राणातिपाताद्याश्रवछायामात्ररूपोऽपि सूक्ष्मातिचाररूपोऽपि न भवेत्, कारणाभावात्। अय भावः—यदि चारित्रमोहनी-

---

પ્રમુખને ભય ત્રાસને ઊપજાવાવે કરી અહરુપહરુ લેવુ ઇત્યાદિ જે અનેક પ્રકારિ અનુષ્ઠાન સભાવ્યો જે થાનાર જીવઘાતાદિદોષ તેહને ભયે ઉત્પન્ન, અવસર આશ્રયીને અનિયતપણિં એતલા માહિલુ કુણેક નિરતર હુઇજ. તે પણિ પિપીલિકાદિ જીવ તેહને ભયત્રાસનુ ઊપજાવવુ તે સાવદ્ય, એહવુ જણાવીને જીવઘાતના વર્જનાની અભિપ્રાયવતને પણિ અશકય પરિહારઇ' તેહનુ સેવવુ, તે છઠ્ઠા ચિહ્નરૂપ છદ્મસ્થપણાનુ જણાવનાર સામાન્યથી સદાઇ સુલભજ તે પ્રતિષેવવઇ સંયત તે યથાવાદી તેહવો કરનાર નહી એ પણિ માનવુ અશકયપરીહારે પણિ પ્રત્યાખ્યાત જે સાવધ તેહના સેવવાથી. પ્રમાર્જનાદિકને અણકરવાપણુ સપજે ઇમ તો નહિં જીવઘાતને વર્જનને અભિપ્રાયે સાધુને મહાનિર્જરાના હેતુપણાથી. જીવઘાત વર્જવઇ કરી જિનાજ્ઞાના પરિપાલ નથી. કેવલીને તઉ સાતે ચિહ્ન મોહની ક્ષયથી ઉપનાપણિં કરી તેથી વિલક્ષણ મિચ્છામિ દુક્કડાદિક જે કહ્યા વ્યાપાર તેણિં રહિતપણિં જણાવ્યા સદા એ કેવલીપણાના જ્ઞાપક સુલભજ કેવલી તઉ કિવારે પણિ મિચ્છામિ દુક્કડાદિક કહ્યો જે વ્યાપાર તે વત હુઇ ઇમ તઉ નહી વિચાર્યું' જે જીવઘાતાદિરૂપ કારણ તેહના અભાવથી તો ઇમ લિંગનુ નીરૂપણ મિથ્યાજ. તુ કેવલી અથવા છદ્મસ્થ એહવે પૂછને અને ઉત્તરેજ નિશ્ચયના સભવથી એહવુ જઓમ બોલ પરીક્ષા કરિવા યોગ્ય અને પરીક્ષાનો કરનાર તે બિહુમધ્યે એકને મૂકપણિં દેશકાલાદિકે અતરિત પણિં કથકને વચને અવિશ્વાસ છતે, લિંગેજ તેહના નિર્ણયના સભવથી એ ગાથાર્થ ॥૧૨॥

હિવે કેવલીપણાના જ્ઞાપક સાતે લિગ તે કેવલીને સર્વાશે આશ્રવનો અભાવ સિદ્ધ થએજ ભલા હુઇ. તેનતી સર્વથા આશ્રવના અભાવ પ્રતિ દષ્ટાતિ કરી સમર્થતો કહે છે.

જ્ઞાનાવરણને અભાવે દોષ લેશમાત્ર ન હુઇંજ જ્ઞાનનો જિમ, તિમ ચારિત્રમોહના અભાવથી દોષ ન હુઇ' ચારિત્રનો —ગાથાર્થ.

વૃત્ત્યર્થ–જ્ઞાનાવરણીયકર્મનો ક્ષય છતે જ્ઞાનનો દોપ સશયવિપર્યયાદિરૂપ તેહનો લેશ, અપિ ઇહા જાણવો. લેશ પણિ છાયામાત્રરૂપપણિ ન હુઇજ યથાશબ્દ તે દષ્ટાતના ઉપન્યાસને વિષે વર્તે, તિમ

यक्षये द्रव्यतोऽप्याश्रवो भवेत्, तर्हि चारित्रमोहनीयमितिसञ्ज्ञायाः अभावः प्रसज्येत, तत्क्षयेऽपि चारित्रदोषस्य तादवस्थ्यात् । अन्यथा ज्ञानावरणीयक्षयेऽपि संशयाद्यभ्युपगमः प्रसज्येत, उभयत्रापि साम्यात् । तथाभूतस्यापि जीवघातस्य चारित्रदोषत्वेन प्रतिपादनात्, अन्यथा तत्प्रत्याख्यानासम्भवात् ।

किञ्च–आस्तां साक्षाज्जीवघातः, सम्भावनारूढोऽतिचाररूपत्वाभावेऽपि कथञ्चिच्चारित्रविशेषस्य दोषत्वेन प्रतीतः । अत एव क्षीणमोहस्याऽपि स्नातकचारित्राभावः, तस्याऽप्यनाभोगहेतुकसम्भावनारूढछायामात्रस्य दोषस्य विद्यमानत्वात् । किञ्च–यद्यवश्यभावित्वेन चारित्रदोषस्याऽपि जीवघातादेरभ्युपगमः तर्हि अवश्यभावित्वेनैव संशयादिकमप्यभ्युपगन्तव्यं स्यात् । तच्च न कस्याऽपि सम्मतम् । तथेदमपि । किञ्च–अवश्यभावित्वेनाप्याश्रवाभ्युपगमे केवली सर्वोत्कृष्टोऽसंयतो भवेदित्यग्रे 'जं तं सेवंतस्स केवलिणो' इत्यादिगाथाव्याख्याया दर्शयिष्यते इति गाथार्थः ॥ १३ ॥

अथ केवलिनोंशतोऽपि प्राणातिपातादयो न भवन्तीत्यत्र व्यञ्जकमाह—

॥ जं हेओवादेअं केवलिणो णेव णाणमाहप्पा । सव्वत्थ उदासिण्णं वंजगमिहमासवाभावे ॥१४॥

तस्मादेव केवलिनः प्राणातिपातादयो न भवन्ति, यद्–यस्मात् कारणात् केवलिनो हेयोपादेयं–हेयं चोपादेयं चेति समाहारे हेयोपादेयं वस्तु नैव–नास्त्येव, केवलज्ञानोत्पत्तिसमय एव हेयोपादेययोः

ચારિત્રમોહના અભાવથી ચારિત્રના દોષનો લેશ પણિ ન હુઇ તે દોષ પ્રાણાતિપાતાદિરૂપ જે આશ્રવ તેહની છાયારૂપ અતિચારરૂપપણિ સૂક્ષ્મ અતિચારરૂપ પણિ ન હુઈ કારણના અભાવથી

એ ભાવ–જઉ ચારિત્રમોહનીય ક્ષીણ થયઈ હુતે દ્રવ્યથી એ આશ્રવ હુઈ તઉ ચારિત્રમોહનીય એ સંજ્ઞાનો અભાવ હુઈ તે મોહને ક્ષયે પણિ ચારિત્રના દોષને રહેવા પણાથી. ઈમ ન માનીઈ તો જ્ઞાનાવરણીયને ક્ષયે પણિ સંશયાદિકનો અંગીકાર થયો જોઈઈ. બિહુ ઠામે સરખાઈપણાથી. તેહવા એ જીવઘાતને ચારિત્રદોષપણિં કહેવાથી ઈમ નહિં તો તે દ્રવ્યવધના પચ્ચક્ખાણના અસંભવથી. વલી રહઉ જીવઘાત તઉ, અનાભોગવતી સંદેહાએલો એ જીવઘાત અતિચારરૂપપણાને અભાવે પણિ કિણેક રૂપે ચારિત્રવિશેષને દોષ પણિં પ્રસિદ્ધજ છે :—

એતલાજવતી ક્ષીણમોહને' સ્નાતકચારિત્રનો અભાવ. તેને ક્ષીણમોહને પણિ અનાભોગથી ઉપનો સંદેહાએલો એ ઉત્પ્રેક્ષિત એ જે છાયા માત્રદોષ તેહના છતાપણાથી વલી જઉ અવસ્યભાવિ કરી ચારિત્રદોષ જે જીવઘાતાદિક તેહનો અંગીકાર હુઇ, તઉ અવસ્યભાવિપણિ કરી સંશયાદિક પણિં માન્યુ જોઇઇ તે તો કોઇને સંમત નહીં. તિમ એ પણિ, વલી અવસ્યભાવિપણિ પણિં આશ્રવ માને' હુતે કેવલી સર્વોત્કૃષ્ટ અસંયત હુઈ, એહવુ આગલિં 'जं तं सेवंतस्स' એ ગાથાને વિષે દેખાડીસ્યે. એ ગાથાનો અર્થ ॥૧૩॥

હિંવે કેવલીને અંશથી એ પ્રાણાતિપાતાદિક ન હુઇ. ઇહા જણાવનાર કારણ કહે છે—

જે હેય અને ઉપાદેય તે કેવલીને ન હુઇજ, જ્ઞાનના માહાત્મ્યથી.' તઉ સ્યુ હુઇ ? સર્વત્ર ઉદાસીનપણુ' એહજ વ્યંજક, આશ્રવના અભાવને વિષે જાણિવુ.

વૃત્તિનો અર્થ —તે વતીજ કેવલીને પ્રાણાતિપાતાદિક ન હુઈ. જે કારણથી કેવલીને હેય અને' ઉપાદેય એ બિંએ વસ્તુ ન હુઇજ, કેવલજ્ઞાનનઈ ઉત્પત્તિસમયે જ, હેય જે છાડવાયોગ્ય અને ઉપાદેય જે

हेतुर्बन्धकारणम्, यदुक्तम्-' स्वयं भयपरिणामः परेषामथ भापनम्। त्रासनं निर्दयत्वं च भयं प्रत्याश्रवा अमी ' ॥ १ ॥ इति प्रथमकर्मग्रन्थवृत्तौ ( गा० ५६ ) भयमोहनीयकर्मबन्धोऽपि भयमोहनीयप्रकृतिजन्य एव भवति, क्षीणमोहनीयस्य भयमोहनीयबन्धाभावात्। तेन भयमोहनीयबन्धः किंलक्षणः ? भयहेतुः [तेन] भयं-भयमोहनीयं, हेतुः-कारणं यस्य स तथा। एकमेव विशेषणं समासभेदेन भिन्नार्थाभिधायकम्। त्रिधाऽपि चारित्रदोष, कुतः ? चारित्रमोहात्, चारित्रमोहनीयजन्यं हि दूषणं चारित्रस्यैव भवति, सर्वेषामपि कर्मणां सान्वर्थनामकत्वात्। तत्र दृष्टान्तमाह-यथा वेदमोहनीयजन्यो मैथुनदोषश्चारित्रस्यैव भवति, तस्याऽपि चारित्रमोहनीयप्रकृतिरूपत्वात्। मैथुनविरतिर्हि चतुर्थमहाव्रतरूपत्वेनोभयवादिसम्मतत्वात्। एवं सोऽपि जीवघातलक्षणश्चारित्रदोषः केवलिनो नियमेन संयमोपघातकः, सर्वोत्कृष्टत्वात्। तच्च प्राग् प्रदर्शितम्। तस्मात्केवलिनः संयतत्वमिच्छद्भिरर्थं जीवघातादिकं लेशतोपि नाभ्युपगन्तव्यमिति गाथार्थः ॥

अथ केवलिमात्र-जीवमात्रयोः परस्परं घात्यघातकभावसम्बन्धाभावः कथं सञ्जातः ? इति जिज्ञासायामाह—

॥ पुढवीपमुहा जीवा उप्पत्तिप्पमुहभाइणो हुंति। जह केवलिजोगाओ भयाइलेसंपि न लहंति ॥४९॥

व्याख्या—पृथिवीप्रमुखाः-पृथिव्यादित्रसपर्यन्ताः। 'यत्तदोर्नित्याभिसम्बन्धात्' तथोत्पत्तिप्रमुखभाजिनो भवन्ति-उत्पत्तिस्थितिविपत्तिमन्तो जायन्ते, यथा केवलियोगात्-केवलिनः कायादिव्यापारात् -

---

प्रकृतिविशेष छे. तेहनुं हेतु ते बंधनुं कारण पोते भयनो परिणाम, परने बीहाववुं, त्रास, निर्दयपणुं ए आश्रव-कर्मबंधनो हेतु भय प्रते जाणवो, भयमोहनीय कर्मनो बंधपणि भयमोहनीयप्रकृति-जन्य ज हुई ते वती भय ते भयमोहनीय, ते कारण छे जेहनुं ते, एकज विशेषण ते समासने भेदे भिन्न अर्थनुं कहेनारुं हुई त्रिणि प्रकारे चारित्रदोष स्याथी ? चारित्रमोहथी, चारित्रमोहनीये जन्य ते दूषण चारित्रनुं हुई. सर्वे कर्मने यथार्थनामपणाथी. तिहां दृष्टांत कहे छे-वेदमोहनीये जन्य मैथुन दोष ते चारित्रनो ज वेदने चारित्रमोहनीयप्रकृतिरुपपणाथी. मैथुननी विरति ते चतुर्थ महाव्रतरुप पणि करी बेहु वादीनें संमतपणाथी इम ते पणि जीवघातरुप चारित्र दोष, ते केवलीने नियमे ज संयमनो उपघातक, सर्वोत्कृष्टपणाथी. ए तो पूर्वि देखाडयुं छे ए गाथानो अर्थ ॥ ४८ ॥

हिवे केवलीमात्रनें अनें जीवमात्रने माहोमाहि घात्य-घातकसंबंधनो अभाव किम नीपनो ? एहवी जाणवानी पृच्छाने विषे कहई छई—

पृथिवीप्रमुख जीव उत्पत्तिप्रमुखना भजनार तिम हुई जिम केवलीना योगथी भयादिकनो लेशपणि न पामे.

अर्थः—पृथिवीप्रमुख त्रसजीव पर्यंत. यत्तद्‌शब्दनें नित्ये संबंधथी, तिम उत्पत्ति-स्थिति-विनाशवंत उपजे, जिम केवलीना कायादिकव्यापारथी, भय आदि छे जेहने ते भयोपद्रवादिक, तेहनो अंशप्रति पणि न पामे. केवलीना योगने केवलज्ञानने उत्पत्तिसमये ज शुभपणि परिणमवाथी तेहनी तेणें योगें सर्वे जीवनी रक्षा ज हुई, ए संभवे नहीं इम नहीं. तिमज अनादि जगत्‌स्थितिथी. जिम लवणसमुद्रनी ज शिखाने अने वेलाने वृद्धि अने हानि, तेहवो कालनियत वायुनी उत्पत्ति तेहने उपशांतिने वशे कालनियत, तिम तीर्थंकर-चक्रवर्त्यादिक नियतसंख्याक ज. चक्रादिकरत्ननी

भयमादौ येषामुपद्रवादीना ते भयादयस्तेषा लेश –अशस्त न लभन्ते–न प्राप्नुवन्ति, केवलियोगाना केवलज्ञानोत्पत्तिसमय एव शुभत्वेन परिणमनात्, तेन तैर्योगैः सर्वेषामपि जीवाना रक्षैव भवति । न चैतदसम्भवि, तथैवानादिजगत्स्थिते । यथा लवणसमुद्रस्यैव शिखाया वेलायाश्च वृद्धिर्हानिश्च तथाविध-कालनियतवायूत्पत्तितदुपशान्तिवशेन कालनियता, तथा तीर्थकृच्चक्रवर्त्यादयो नियतसङ्ख्याकाः, चक्रादिरत्नानामुत्पत्तिश्चक्रवर्तिनः काल एव इत्यादि जगत्स्थितिः सर्वकालनियता । अत एव मेघे वर्षत्यपि जलं तथापरिणत यथाऽवाप्तकेवलायाः पुष्पचूलायाः साध्व्या यथासुख प्रवर्त्तनेऽपि अचित्तप्रदेशैरेव गमनागमनादि सम्पन्नम् । एतेन नद्युत्तारादौ जलजीवविराधना केवलिनोऽपि भवतीति कल्पनाऽपि परास्ता, केवलिनाऽनुक्तत्वात् स्वयमस्मादृशैरदृष्टत्वाच्च ।

किञ्च–यद्यपि तीर्थकृद्व्यतिरिक्तोऽमुकनामा केवली नदीमुत्तीर्णवानिति साम्प्रतीनागमे दृष्टं श्रुत च नास्ति, तीर्थकृतस्तु सुरसञ्चारितकनककमलोपरि गमनागमनपरिणतस्य जलस्पर्शस्याऽप्यभावः, तथाऽपि भवत्सन्तुष्ट्यर्थं तदङ्गीकारेऽपि न काचित्क्षितिः, अचित्तप्रदेशैरेव तदुत्तारात् । तन्निर्णीतिस्तु प्रवचनप्रामाण्यान्यथानुपपत्त्यैवावसातव्या । सा चैव–जल तावत् द्विविध सचित्ताचित्तभेदात्, यदागमः– ‘दुविहा पुढविकाइआ प०, त० परिणया चेव अपरिणया चेव जाव वणप्फइकाइआ’ इति श्रीस्थानाङ्गे ( सू० ७३ ) तत्र परिणता –स्वकायपरकायशस्त्रादिना परिणामान्तरमापादिता अचित्तीभूता इत्यर्थः । तथा ‘सत्तहिं ठाणेहिं केवली जाणेज्जा, त० णो पाणे अइवाइत्ता भवती’त्यादिसूत्रद्वयप्रामाण्यान्यथानुपपत्त्याऽचित्तप्रदेशैरेव केवली नदीमुत्तरतीति निश्चीयते, कृतकृत्यत्वेन सचित्तजलनद्युत्तारे प्रयोजनाभावोऽपि । यस्तु नद्यादिजलमात्रे सचित्तत्वेन व्यपदेशः, स च विशिष्टातिशयज्ञानरहितछद्मस्थापेक्ष । तेषा

---

ઉત્પત્તિપણિ ચક્રવર્ત્તિને કાલે જ ઇત્યાદિ જગત્‌સ્થિતિ છે સર્વ કાલે નિયત, એવતીજ વરસતે પણિ મેઘે જલ તિમ પરિણમ્યુ, જિમ પામ્યું કેવલ જેણીઇ એહવા પુષ્પચૂલાસાધ્વીને યથાસુખે પ્રવર્ત્તતે પણિ અચિત્તપ્રદેશે જ ગમનાગમનાદિક ઉપનુ.

એતલે કહેવે નદ્યુત્તારાદિક વિષઈ જલજીવની વિરાધના તે કેવલીને પણિ હુઈ. એ કલ્પનાએ ટાલી કેવલીઇ અણકહ્યાથી અને પોતે અમ્હે અણદીઠાપણાથી જો એ તીર્થકૃતથી અન્ય અમુકે નામે કેવલી નદી ઉતરતો હુઓ એહવુ હિંવડાને આગમે દીઠુ અને સાભલ્યુ નથી તીર્થંકરનો તો સુરે સચારિત જે સુવર્ણકમલ તે ઉપરિ ગમનાગમનાદિકે પરિણમ્યાને જલના સ્પર્શનો એ અભાવ, તોહે તુઝને સતોષને અર્થે તે અગીકાર કરતે પણિ કાઇ ક્ષતિ નથી અચિત્તપ્રદેશે જ નદીના ઉત્તારથી તેહનો નિશ્ચય તો પ્રવચનની પ્રમાણપણાઇની અન્યથા અયુક્તતાઇ જાણવો તે તે ઇમ–જલ તો બિં ભેદિં સચિત્ત અને અચિત્તભેદથી, એ અર્થ પૂર્વે કહ્યો છે એ બે સૂત્રની પ્રમાણપણાઇની અન્યથા અયુક્તતાઇ અચિત્તપ્રદેશેજ કેવલી નદી ઉતરે, એહવો નિશ્ચય કરીઈ છે, કૃતકૃત્યપણિ કરી સચિત્ત જલ નદીના ઉત્તારને વિષે પ્રયોજનના અભાવપણિ.

અને જે નદ્યાદિજલમાત્રને વિષે સચિત્તપણે જે કથન, તે તઉ વિશિષ્ટઅતિશયજ્ઞાને રહિત છદ્મસ્થને અપેક્ષીને, તેહને તો જિનવચનઇ પૃથિવ્યાદિ પાચને વિષે સચિત્ત અને અચિત્ત એ બે મધ્યે એક પણિ શ્રદ્ધાન છતે પણિ, પૃથિવ્યાદિ જીવવિષયીઓ જે સાક્ષાત્કાર તેહને અભાવે કરી, એ જલ સચિત્ત એ જલ અચિત્ત, એહવો વિવેક ધરીને વ્યવહાર કરિવાને અથવા પરિ-

च जिनवचनेन पृथिव्यादिषु पञ्चस्वपि सचित्ताचित्तयोरन्यतरत्वेन श्रद्धाने सत्यपि पृथिव्यादिजीवविषयकसाक्षात्काराभावेन 'इदं जल सचित्त'मिति विवेच्य व्यवहर्तुं परिहर्तुं चाशक्यत्वेनोभयत्राऽपि सचित्तत्वेन व्यपदेशो न दोषावह । यथा शुद्धोऽप्याहारोऽशुद्धत्वशङ्कया अशुद्ध इव व्यवहर्त्तव्यः परिहर्त्तव्यश्च, न पुनरुभयत्रोऽपि सचित्तत्वेन श्रद्धानमेव, मिथ्यात्वप्रसक्तेः । 'अजीवे जीवसन्न 'त्ति वचनात् । आस्तां सचित्तत्वेन निश्चयः, सर्व जलं सचित्तं भविष्यति नवेति शङ्कापि मिथ्यात्वमेव । यदाह श्रीहरिभद्रसूरिः—'एकस्मिन्नप्यर्थे सन्दिग्धे प्रत्ययोऽर्हति हि नष्टः । मिथ्यात्वदर्शन तत् स चादिहेतुर्भवगतीनाम्' ॥ १ ॥ इति श्री आ० नि० वृत्तौ । न चैत्र केवलिन' सम्भवति, तस्य तज्जीवविषयकसाक्षात्कारेण विविच्य व्यवहर्तुं परिहर्तुं च शक्यत्वात् । किञ्च–केवलिनोऽपि नद्युत्तारे यदि जलजीवविराधनाभ्युपगम्यते तर्हि जैनप्रवचनस्याप्रामाण्योद्घोषणं केवलितिरस्करणं चेति दोषद्वयं सर्वदोषाणामाश्रयभूतमनिवार्यं स्यात् ।

तथाहि—नद्यादौ जलमात्रं सचित्तमेवेति श्रद्धाने सत्येव नद्यादौ केवलिनो जलजीवविराधनाभणनं तथा च–'दुविहा पुढवीकाइआ प० तजहे 'त्यादिप्रवचनस्याप्रामाण्यसिद्धिः । तत्सिद्धौ च सिद्धस्तत्प्रणेता भगवान् श्रीमहावीरोऽनाप्तः, मृषाभाषित्वात् । अनाप्तप्रणीत च सकलमपि जैनवचनमप्रमाणमेव अनाप्तमूलकत्वादित्येको महान्दोष, तथा केवली कदाचिदपि प्राणानामतिपातयिता न भवतीत्यादि यावत् यथावादी तथाकर्त्ता भवतीति वचनैर्निजस्वरूपं निरूपयन्नेव मा ब्रूहि नद्युत्तारादौ जलजीवविराधना कुर्वाणः सर्वजनप्रतीतोऽस्माभिरपि दृष्टः कथं यथावादी तथाकारी भवान् ? इति निष्ठुरवचनैः केवली

---

हरवाने अशक्य पणि करी, बिहु ठामे सचित्तपणे कहणु ते दोषदायक, नहीं. जिम शुद्धपणि आहार, अशुद्धपणानी शंकाइ अशुद्धनी परि व्यवहरिवो अनई परिहरिवो पणि बिहु ठामे' सचित्तपणि'-श्रद्धान नहीं. मिथ्यात्वना प्रसंगथी, अजीवने विषे जीवसंज्ञा ए वचनथी. अत एव उत्कृ भले मिश्रजल अनई अचित्तजलना न हुई छद्मस्थने', अप्रत्ययपणाथी. ए शास्त्रीयवदन अणदेखीने जलजीवने' प्रत्यक्षपणु मान्यु छे ते मिथ्या जाणिवु, अने जलने विषे नियमे' ज अनंतकायना सद्भावथी सचित्त पणु ज मान्यु छे तेणि ते पणि बृहत्कल्पोक्त अचित्त इहथी मिथ्या जाणवु. ईम सचित्त जलपाने अनंतकायनो दूषण प्रसंग पणि जाणवो. रहो सचित्तपणि निश्चय, सर्वजल सचित्त हुइसे अथवा नहि ए शंका पणि मिथ्यात्वज एक अर्थपणि संदेहाले, अरिहंतने विषे विश्वास नष्ट थयो. ते मिथ्यात्वदर्शन, संसारगतिनु आदि कारणपणि एहवु केवलीने न संभवे ते केवलीने ते जलना जीवविषइई स्पष्टज्ञाने' करी विवेक करी व्यवहार अने परिहरिवाना शक्यपणाथी'

वली केवलीने नदी उत्तारने विषे जलजीवविराधना मानीई तो जैनप्रवचनने अप्रमाणपणानु उद्घोषणु, अने केवलीने तिरस्कार ए बिंदोष, आश्रयभूत सर्व दोषनु, ते अणवारवा योग्य थाइ. ते किम ? नद्यादिकने विषे' जलमात्र सचित्त एहवे श्रद्धान छतेज, नद्यादिकने विषे केवलीने जलजीवविराधनानु कहेवु. तिवारई बि प्रकारे पृथिवीकाइआ ' ईत्यादि वचननई अप्रामाण्यनी सिद्धि ते अप्रामाण्यनी सिद्धिथिके तो सिद्ध थयो, तेहनो प्ररूपक श्रीमहावीरभगवंत, ते सत्पुरुष नहिं, मृषाभाषीपणाथी, असत्पुरुषे प्रणीत तो सकलपणि जैनप्रवचन प्रमाण ज नहीं, वंचकपुरुषना प्ररूप्याथी, ए एक मोटो दोष. तिम वली केवली किवारे पणि प्राणनो अतिपातक-हिंसक न हुई ईत्यादि यावत् जेहवु' बोले तेहवु पाले' एहवे वचने' पोतानु' स्वरूप कहेतोज. म बोल नद्युत्तारने विषे

तिरस्करणीयो भवेदिति द्वितीयोऽपि दोषो गरोयानिति दोषद्वयं केवलिनो भणत' परस्य स्फुटमेव मिथ्यात्व, मिथ्यात्वोदयमन्तरेण तथाभणितेरसम्भवात्। तस्मात् पुष्पचूलावृष्टिदृष्टान्तेन नद्यादौ यथास्थितमेव जलं जलवायुसूर्यकिरणादिलक्षणस्वकायपरकायशस्त्रादिना तथाविधकालादिसामग्रीयोगे कदाचिदचित्ततयाऽपि परिणमति, पुनरपि तदेव जल सचित्तभवनहेतुकालादिसामग्रीयोगेन च सचित्ततयाऽपि परिणमति। तत्राऽपि दृष्टान्तः सम्मूर्च्छिममनुष्योत्पत्तिस्थानान्येव। परमेतत्परिणतिस्तथाभूता केवलिगम्याऽवसातव्या। न च व्यवहारतः केवलिनोऽपि जलजीवविराधनोच्यते इति वाच्यम्, ईर्यापथिकीप्रतिक्रमणादेरपि व्यवहारतो वक्तव्यतापत्तेः। 'नईसतरणे पडिक्कमइ' त्ति वचनात्। इष्टापत्तौ च स्नातकत्वहानिप्रसक्तेः केवलिन. स्वरूपहानिहेतुर्महाऽवर्णवाद इति। किञ्च–नद्युत्तारादौ जलजीवविराधना सर्वेषामपि नियमेन भजनया वा?। आद्ये, वक्तुर्मिथ्यात्व जलस्य द्वैविध्येनाश्रद्धानात्, एकस्याऽपि जिनवचनस्याश्रद्धानेन मिथ्यात्वस्योक्तत्वात्। तथा–'पयमक्खरपि इक्कपि जो न रोएइ सुत्तणिद्दिट्ठ। सेसं रोअतो वि हु मिच्छद्दिट्ठी जमालिव्व'॥ १॥ त्ति, द्वितीये तु सिद्ध न समीहित, छद्मस्थस्य कस्यचिद्भवति कस्यचिच्च न भवति, केवलिनस्तु सर्वस्याऽपि न भवतीति भजनया सिद्धौ कृत प्रसङ्गेनेति गाथार्थ ॥४९॥

अथ केवलिनः क्रिया यदि कस्याऽपि भयहेतुर्न भवेत् तर्हि मक्षिकाप्रमुखाः क्षुद्रजन्तव. कथमनुकूला भवन्ति? इति शङ्कायामाह—

---

જલજીવવિરાધના કરતો સર્વજનપ્રસિદ્ધ અમ્હે દીઠો. કિમ યથાવાદી તિમ કરનાર તુ? ઇમ નિષ્ઠુરવચને' કેવલી તિરસ્કારવા યોગ્ય હુઈ. એ બીજો દોષ મોટો એ દોષદ્વય કેવલીને કહેતે પરને પ્રગટજ મિથ્યાત્વ, મિથ્યાત્વના ઉદયવિના તેહવા કહેવાના અસંભવથી

તે વતી પુષ્પચૂલાની વૃષ્ટિને દૃષ્ટાંતિ નદ્યાદિકને વિષે યથાસ્થિત જ જલ, જલ–વાયુ–સૂર્ય–કિરણાદિરૂપ 'સ્વકાય–પરકાયશસ્ત્રાદિકે તથાવિધ' કાલાદિસામગ્રીને યોગે 'કિવારેકે' અચિત્તપણિં પરિણમઇ વલી તેહજ જલ 'સચિત્ત થાવાનો હેતુ જે' કાલાદિસામગ્રી તેહને યોગે સચિત્તપણિં પણિ પરિણમે. તિહા પણિ દૃષ્ટાંત સંમૂર્ચ્છિમમનુષ્યના ઉત્પત્તિસ્થાનકજ પણિ એ પરિણતિ કેવલીને ગમ્ય જાણવી. વ્યવહારથી કેવલીને પણિ જલજીવની વિરાધના કહીઇ એહવુ ન કહેવું ઇર્યા-પથિકીનુ પ્રતિક્રમણાદિક તેહને પણિં વ્યવહારથી કહણની આપત્તિથી 'નદી ઉત્તરે પડિક્કમે' એ વચનથી, ઈષ્ટની આપત્તિયિકે તઉ સ્નાતકપણાની હાની, કેવલીને સ્વરૂપહાનિનુ હેતુ મહાઅવર્ણવાદ, વલી નદ્યુત્તારાદિકને વિષે જલ જીવવિરાધના તે સર્વને પણિ નિયમે' અથવા વિકલ્પે? પ્રથમપક્ષે, કહેનારને મિથ્યાત્વ જલ ને દ્વિવિધ પણિં અશ્રદ્ધાનથી. એકઇ જિનવચનને અશ્રદ્ધાને મિથ્યાત્વને કહ્યાપણાથી. તે કિમ? 'પદ અક્ષર પણિં એક જે સૂત્ર નિર્દિષ્ટ ન માને બીજુ માને તો પણિ મિથ્યાદષ્ટિ જમાલિની પરે' બીજે પક્ષે, તઉ સિદ્ધ થયુ 'અમ્હારુ' વાછિત, છદ્મસ્થને તો કુણેકને હુઇ અને કુણેકને ન હુઈ, કેવલીને તઓ સર્વને એ ન હુઈ, એ હેતુથી ભજનાઇ સિદ્ધિયિકે પૂર્ણ થયુ પ્રસંગે એ ગાથાર્થ ૪૯.

હિવે કેવલીની ક્રિયા જઉ કોઇને' ભયકારણ ન હુઈ, તઉ મક્ષિકાપ્રમુખ જે હીનજતુ કિમ અનુકૂલ હુઈ એ આશંકાને વિષઈ કહે છે

'તે વતી મક્ષિકાપ્રમુખ જીવ તે સ્વભાવ ક્રિયાને વિષે તત્પર હુઈ, પણિ જિનની ક્રિયાઈ પ્રેર્યા ક્રિયાનો લેશ પણિં ન કરે

॥ तेणं मच्छिअपमुहा सहावकिरिआपरायणा हुंति । ण य जिणकिरिआपेरिअ–किरिआलेसंपि कुव्वंति ॥

व्याख्या—येन कारणेन अनन्तरोक्ता जगत्स्थितिः, तेन कारणेन मक्षिकाप्रमुखाः–मक्षिका-पिपीलिका–दंश–मशकादयः स्वभावक्रियापरायणाः–सहजसमुत्थगमनादिक्रियाकारिणो भवन्ति । न च जिनक्रिया–केवलिनो गमनागमनादिरूपा तया प्रेरिता–तन्निमित्तका या क्रिया तस्या लेशमपि न कुर्वन्ति, केवलियोगहेतुकस्वशरीरसङ्कोचमपि न कुर्वन्तीत्यर्थः । शरीरसङ्कोचस्याऽपि भयजन्यत्वात्, भय च केवलिक्रियाजन्यं कस्यापि न भवति । यदागमः—'अभयदयाण' मिति शक्रस्तवे वृत्त्येकदेशो यथा–'प्राणान्तिकोपसर्गकारिष्वपि न भयं दयन्ते, यद्वा अभया–सर्वप्राणिभयत्यागवती दया–कृपा येषां ते अभयदयास्तेभ्य' इत्यादि । भयमोहनीयक्षयेण सदैवाऽऽत्मपरभयहेतुक्रियाया अपि परित्यागात् । यदुक्तम्–'स्वयं भयपरिणामः परेषामथ भापन' मित्यादि प्रागुपदर्शितम् । तत्राभयदायकत्वमपि प्राणिना साक्षात्त्रासादिजनकस्य भयदानस्य राहित्येनावसातव्य, तथाभूतस्यैव भयदानस्य भयमोहनीय प्रत्याश्रवरूपत्वात् । यत्तु तीर्थकृदाद्युपदेशश्रोतॄणां पारत्रिकभयं जायते, तन्न तीर्थकृदाद्युपदेशजन्यम् । किन्तु नरकादिदुःखतत्प्राप्तिकारणाश्रवविषयकसम्यग्ज्ञानजन्यम् । सम्यग्ज्ञान च प्राय उपदेशजन्यम् । उपदेशस्तु अनुकम्पामूलकत्वेनानुकम्पारूपो विकृतरुधिरश्राववत् ससर्पविलगर्त्तापतिताव्यक्तनिजपुत्राकर्षणवद्वा भाविभूयोदुःखहेतु-

વ્યાખ્યા–જે કારણવતી તે જગતની સ્થિતિ છે, તે કારણે મક્ષિકા–પિપીલિકા–દંશ–મશકાદિ-સ્વભાવે જે ક્રિયાને વિષે તત્પર–સહજે જ ઉત્પન્ન ક્રિયાના કરનાર હુઇ. જિનની ક્રિયા–કેવલીની ગમનાગમનાદિ રૂપ, તેણીઇ પ્રેરી, એતલે તે હેતુથી ઉપની જે ક્રિયા તેહનો લેશ પણિ ન કરે. કેવલીના યોગ રૂપ હેતુથી પોતાના શરીર સંકોચ પણિ ન કરે. શરીરસંકોચને પણિ ભયજન્યથી ભય તો કેવલીની ક્રિયાઇં જન્ય કુણેને ન હુઈ. જે માટિં આગમ–'અભયદયાણમિ'ત્યાદિ .વૃત્તિનો એક અંશ કહે છે–પ્રાણાંતિક ઉપસર્ગકારીને વિષે પણિ ભય ન દિઈ. બીજો અર્થ કહે છે–સર્વ પ્રાણીનો ભય તેહનો ત્યાગવંત દયા છે જેહને, ભગવંતને. ભયમોહનીયને ક્ષયે સદાજ પોતાને પરને ભયનું હેતુ જે ક્રિયા તેહના પરિત્યાગથી. એ તો પૂર્વે દેખાડયું છે, તિહા અભયદાયકપણું પણિ પ્રાણીને સાક્ષાત્ ત્રાસાદિકજનક જે ભયદાન તેહને રહિતપણિ જાણવું તેહવા ભયદાનને ભયમોહનીય પ્રતિં આશ્રવરૂપપણાથી.

જે તો તીર્થંકૃતના ઉપદેશના સાંભલનારને પરભવનું ભય ઉપજે છે. તે તીર્થંકરને ઉપદેશે જન્ય નહી. તો સ્યું ? નરકાદિદુઃખ તત્પ્રાપ્તિનું કારણ જે આશ્રવ, તે વિષયીઓ સમ્યગ્જ્ઞાને જન્ય. સમ્યગ્જ્ઞાન તો પ્રાહે ઉપદેશે જન્ય. ઉપદેશ તો અનુકંપામૂલકપણે કરી અનુકંપારૂપ. વિણઠારૂધિરના શ્રાવની પરે સર્પસહિતબિલગર્ત્તાનિં વિષે પતિત જે અવ્યક્ત પોતાનો પુત્ર તેહના આકર્ષણની પરે, થાનારું જે બહુ દુઃખ, તેહનું હેતુ જે પ્રાણાતિપાતાદિ આશ્રવ, તેહના પરિજ્ઞાનને અર્થે જ. જ્ઞાન તો આશ્રવ નહી. સંવરરૂપપણાથી. તે જ્ઞાનનું ફલ તો અજ્ઞાનની નિવૃત્તિ જ જાણવી. અને જે આશ્રવપરિત્યાગનું હેતુ જે પરભવનું ભય તે તે પ્રસંગે ઉત્પન્ન જાણવું. જિમ પ્રદીપનું ફલ અંધકારનો અપગમજ, અને જે સર્પાદિક અને જે માલાદિક દર્શનથી ઉપનું જે તેહનું જ્ઞાન, તેથી ઉપનું જે ભય હર્ષાદિક તે પ્રસંગાગત, જ્ઞાન તે બહુ યથાર્થવસ્તુ વિષયઇં પોતાનો વૈરી જે અજ્ઞાન, તેહનું બાધક રાગરૂપ જે વૈરી તેહના નાશને હેતુ. બીજું કર્તા હુંતું ન પ્રયું જે, દીપ જે અંધકારને પ્રગટ કરે રૂપ, તે જુઓ, જે કારણથી સર્વ પોતાના વિષયને સાધે, હાનોપાદાનાદિકબુદ્ધિ તે પ્રસંગાગત.

प्राणातिपाताद्याश्रवपरिज्ञानार्थमेव । ज्ञानं च नाश्रवः, संवररूपत्वात्, तस्य च फलमज्ञाननिवृत्तिरेव । यच्च आश्रवपरित्यागहेतु पारत्रिकभयं, तत्प्रासङ्गिकमवसातव्यम् । यथा प्रदीपस्य फलं तमोऽपगम एव । यच्च सर्प्पादिस्रगादिदर्शनसमुत्थतत्परिज्ञानजन्यं भयहर्षादिकं तत्प्रासङ्गिकम् । यदुक्तम्–' ज्ञानं भूरि यथार्थवस्तुविषयं स्वस्य द्विषो बाधकं, रागारातिशमाय हेतुमपरं युङ्क्ते न कर्त्तुं स्वयम् । दीपो यत्तमसि व्यनक्ति तदिदं रूपं स एवेक्षतां, सर्वः स्वं विषयं प्रसाधयति हि प्रासङ्गिकोऽन्यो विधिः ' ॥ १ ॥ इति प्रथमाङ्गवृत्तौ । अत एव भगवता श्रीमहावीरेण साधुप्रेषणद्वारा मङ्खलिपुत्रस्य सम्यग्ज्ञानोद्बोधनिमित्तं स्वल्पायुर्ज्ञापकवचनं श्रावितम् । तच्च तस्याऽन्येषां च बहूनामैहिकपारत्रिकहितहेतुरेव, अन्यथा सर्वज्ञप्रवृत्तेरसम्भवात् । तेन तद्वचः श्रुत्वा सञ्जातसम्यग्ज्ञानो मङ्खलिपुत्रः अर्हदाशातकोऽहं समुपार्जितपापप्राग्भारो मृत्वा प्रेत्य क्व ? यास्यामीति समुत्पन्नपारत्रिकभयः कृतनिजपापगर्हापरायणः सञ्जातः । तथाभूतगर्हया चापेक्षिकाल्पानन्तसंसारकरणपूर्वकपुण्यप्रकृतिबन्धं कृतवानिति । अयं भावः–तीर्थकरश्रावितवचनं श्रुत्वा सम्यग्ज्ञानवान्, सम्यग्ज्ञानेन च सञ्जातपारत्रिकभयजन्या निजपापगर्हा, तथाभूतगर्हया चापेक्षिकाल्पानन्तसंसारकरणपूर्वकपुण्यप्रकृतिबन्धश्चेत्येवं कार्यकारणभावसम्बन्धं पर्यालोच्य भव्यानां ज्ञेयवस्तुविषयकसम्यग्ज्ञाननिमित्तमेवार्हदाद्युपदेशो भवति, न पुनरैहिकपारत्रिकभयनिमित्तमपीति मन्तव्यम् । परम्परया च कारणं प्रायोऽकिञ्चित्करमेव, तत्कर्तृत्वेन व्यपदेशाभावात् । न हि धान्यजन्या तृप्तिः कर्षणाम्बा–जन्येति कस्याऽपि मतिः ।

---

એતલાજ વતી ભગવત શ્રીમહાવીરે સાધુને મોકલી મંખલીપુત્રને સમ્યગ્ જ્ઞાનને ઉદ્બોધને અર્થે અલ્પઆયુ જણાવવાનું વચન સંભળાવ્યું. અને તે વચન તો તે મંખલીને અને ઘણુને એ ભવ અને પરભવનું હિતનું કારણ જ. અન્યથા સર્વજ્ઞની પ્રવૃત્તિના અસંભવથી. તેવતી તે વચન સાંભલી થયું છે સમ્યગ્ જ્ઞાન જેહને એહવો મંખલી, તે અરિહંતનો આશાતક હું, ઉપાર્જ્યો પાપનો પુંજ જેણે એહવો મરીને પરભવે કિહાં જાઈસ્ય ? એહવો ઊપનો છે પરભવનો ભય જેહનેં એહવો, કરી છે પોતાના પાપની નિંદા તેહને વિષે તત્પર તે થયો. તેહવી ગર્હાઇં તો અપેક્ષાઈ જે અલ્પ અનંતસંસારકરણપૂર્વક પુણ્યપ્રકૃતિબંધ પ્રતે કરતો હુઓ.

એ ભાવ તીર્થંકરે સંભલાવ્યું તે વચન સાંભલી સમ્યગ્ જ્ઞાનવંત, સમ્યગ્જ્ઞાને કરીને તો થઇ પરભવના ભયથીં જન્ય, પોતાના પાપની ગર્હા, તેહવી નિંદાઈં તો અપેક્ષાઈં જે અલ્પ અનંતસંસારકરણપૂર્વક પુણ્યપ્રકૃતિબંધ એણી રીતિ કાર્યકારણભાવસંબંધ વિચારીને ભવ્યને જ્ઞેયવસ્તુવિષયીઆ સમ્યગ્જ્ઞાનનિમિત્તજ અહિંસાદિકનો ઉપદેશ હુઈ પણિ એ ભવ પરભવના ભયનિમિત્ત નહી એહવું માનવું પરંપરાઈ કારણ તે પ્રાહેં અકિંચિત્કરજ તેહનઇં કરનારપણિ કથનના અભાવથી ધાન્યે જન્ય તૃપ્તિ તે કડએ ઉપની એહવી તો કોઇના મતિ ન હુઇ, પરમાર્થેં તઉ પરભવનું ભયદાન તે અભયદાનજ કહીઈં ભયમોહનીયના બંધના હેતુપણાના અભાવથીકે, અનંતદુખને અનુભવે જન્ય જે ભય તેહના છાડવાપૂર્વક અનંતસુખના નિપજાવવાપણાથી જિમ લોકને વિષેં પણિ ભયસહિત અને ભયરહિત જાણીને ઉપદેશે સભયમાર્ગને છાડવાપૂર્વક નિર્ભયમાર્ગે જાતો પંથી સુખી થયો. એહવો બોલ, તે સર્વને સંમતપણિ ભયવંત કર્યો ઇમ નહિ કોઇ કહે. ઇમ નહીં તો સમ્યક્ત્વાદિ પ્રાપ્તિને અર્થે ઉપદેશનો પણિ ઉચ્છેદ હુઇ, સમ્યક્ત્વાદિકને પણિ સમય સમય પ્રતે નિરંતર છદ્મસ્થને વિરાધનાના ભયના હેતુપણાથી તે તો જ્ઞાનાદિક છતે વિરાધનાનું ભય, અણછતે તે તો નહીં, એ વતી અન્વયે અને વ્યતિરેકે પ્રસિદ્ધજ. જિમ છતે ધને ચોરાદિકથી ભય, અણછતેં ધને તો નહીં.

वस्तुतस्तु पारत्रिकभयदानमभयदानमेवोच्यते, भयमोहनीयबन्धहेतुत्वाभावे सत्यनन्तदुःखानुभवजन्यभयत्याजनपूर्वकानन्तसुखसम्पादकत्वात्। यथा लोकेऽपि सभयनिर्भयमार्गज्ञस्योपदेशेन सभयमार्गपरित्यागपूर्वकनिर्भयमार्गेण गच्छन् पथिकः सुखितो जात इति व्यपदेशः सर्वसम्मतः न पुनर्भयवान् कृत इति कोऽपि भणति। अन्यथा सम्यक्त्वादिप्राप्तिनिमित्तमप्युपदेशस्योच्छेदः स्यात्, सम्यक्त्वादीनामपि प्रतिसमयमनवरतं छद्मस्थाना विराधनाभयहेतुत्वात्। तच्च सम्यक्त्वादिषु सत्सु विराधनाभयमसत्सु च नेत्यन्वयव्यतिरेकाभ्या प्रतीतमेव। यथा सति धने स्तेनादिभ्यो भयं, न पुनरसतीति सर्वलोकप्रतीतमिति। यत्तु त्रिपृष्टवासुदेवविदारितसिंहजीवः श्रीगौतमप्रव्राजितोऽपि भगवत्श्रीमहावीरं दृष्ट्वा सञ्जातमारणभयो नष्ट्वा जगाम, तत्र तस्य भयहेतवो न श्रीमहावीरयोगाः, किन्तु तदीययोगा एव। यथा—अयोगिकेवलिशरीरात् मशकादीना व्यापत्तौ मशकादीना योगा एव तत्र कारणम्। तेन केवलिनो गमनागमनादिपरिणतौ पिपीलिकादय क्षुद्रजन्तवः स्वत एवेतस्ततोऽपसरन्ति अपसृता वा भवन्ति। यथा लवणो जम्बूद्वीपं नोत्प्लावयति, अर्हदादिप्रभावादिति भगवती वृत्तौ। यदि च कदाचिदसातवेदनीयकर्मोदयेन दशमशकादयो नापसरन्ति, तदा केवली तत्कर्मक्षयनिमित्तं सम्यगधिसहते, केवलिना केवलज्ञानोत्पत्तिसमय एव तेनैव प्रकारेणात्मीयासातवेदनीयकर्मक्षयस्य दृष्टत्वात्। तथा च सिद्ध क्षीणमोहः कस्याऽपि जीवस्य घातको न भवति, अक्षीणमोहस्तु क्षीणमोहस्य घात्योऽपि न भवतीत्येवरूपेण क्षीणमोहाक्षीणमोहयोरन्योऽन्यं घात्यघातकभावसम्बन्धो न भवति। अन्यथा 'सरणदयाण'मित्याद्यागमबाधा स्याद्। इत्यल प्रसङ्गेनेति गाथार्थः ॥ ५० ॥

अथ 'सिंहावलोकनन्यायेनाऽऽह—

---

અને જે ત્રિપૃષ્ટવાસુદેવે વિદાર્યો જે સિંહનો જીવ તે શ્રીગૌતમે દીક્ષ્યો પણિ ભગવંત શ્રીમહાવીરને દેખીને થયો છે મારણનો ભય જેહને એહવો હુતો નહાસી ગયો, તિહા તેહને ભયનુ હેતુ શ્રીમહાવીરના યોગ તેણે જન્ય ક્રિયા તે નહી. તો સ્યુ ? તેહના જ યોગ. જિમ અયોગિકેવલીના શરીરથી મશકાદિકનો વધ થાતે મશકાદિકના યોગજ તિહા કારણ તે વતી કેવલીને ગમનાગમનાદિક પરિણત છતે પિપીલીકાદિક્ષુદ્રજંતુ તે પોતેજ અહરા પહરા ઓસરિ અથવા ઓસર્યાજ હુઇ જિમ લવણસમુદ્ર જંબુદ્વિપને ન રેલે અર્હદાદિકના પ્રભાવથી એ જગત્ સ્થિતિ, તિમ પૂર્વોક્ત પણિ સ્થિતિ જાણવી, જઉ કદાચિત્ અસાતવેદનીયકર્મને ઉદયે દશમશકાદિક ન ઓસરે, તઓ કેવલી તે કર્મક્ષયને નિમિત્ત સમ્યગ્ સહે. કેવલજ્ઞાનના ઉત્પત્તિ સમયને વિષે જ તેણિ જ કારણે પોતાની અસાતવેદનીયકર્મના ક્ષયને દીઠા પણાથી. તે વતી સિદ્ધ થયુ. જે ક્ષીણમોહ તે કોઇનો હિંસક ન હુઈ, અને ક્ષીણમોહ નહીં ક્ષીણમોહને હણવા યોગ્યપણિ ન હુઈ, એણે રૂપે ક્ષીણમોહ અને અક્ષીણમોહને માહોમાહિ વધ્યવધક ભાવસંબંધ ન હુઇ, ઇમ નહીં તો 'सरणदयाणं' ઇત્યાદિ આગમનો બાધ હુઇ. એ વતી પૂર્ણ થયુ પ્રસંગે એ ગાથાર્થ ॥ ૫૦ ॥

હિવે સિંહના અવલોકને ન્યાયે કહે છે—

સાતે લક્ષણ માહિલુ એકે લક્ષણ છદ્મસ્થ અને કેવલી એ બિહુ ને ન હુઈ જઉ તઉ નિશ્ચયઈ તીર્થંકર મૃષાભાષી અને અજ્ઞાની હુઈ

॥ सत्तण्हं एगयरं दोण्हं णो हुज्ज लक्खणं किंची । ता णूणं तित्थयरो मुसं वइत्ता य अण्णाणी ॥

व्याख्या—सप्तानामपि, लिङ्गानामिति प्रकरणवशाद् बोध्यम् । छद्मस्थकेवलिस्वरूपामिव्यञ्जकानामेकतरल्लिङ्ग द्वयोश्छद्मस्थकेवलिनोर्न भवेत् तर्हि नूनं–निश्चित तीर्थकरो मृषाभाषी अज्ञानी च भवेत्। सम्यक्परिज्ञाने सत्यवादित्वे च सति अलिङ्गस्य लिङ्गत्वेन वक्तृत्वासम्भवादिति गाथार्थः ॥ ५१ ॥

अथाऽतिप्रसङ्गावाप्तानामज्ञानादिदोपाणा साक्षात्परम्परया च फलमाह—

॥ अण्णाणाइअ दोसा देवसरूवस्स णासगा हुंति । दोसुब्भावणवयणं अवण्णवाओ जिणिंदस्स ॥५२॥

व्याख्या—अनन्तरोक्तप्रकारेणातिप्रसङ्गावाप्ताः अज्ञानादयो दोपाः देवस्वरूपस्य नाशकाः—विध्वसका भवन्ति । अज्ञानादिदोपाश्रयत्वेनामिमतेऽर्हति देवस्वरूपस्य हानिरेवेत्यनन्तरफलम् । यतो देवोऽष्टादशदोषरहित एव भवति । यदुक्तम्—'इत्तो अ सक्कस्स लोगपालो वेसमणो अट्ठावयचेइए वदिउ आगओ, चेइआणि वदित्ता गोअमसामि वदति, 'भगवपि धम्म, कहेइ–धम्मो अत्थो कामो, पुरिसत्थाणि तिण्णि हुति लोगमि । धम्माओ जेण इअरे, तम्हा धम्मो पहाणो उ ॥ १ ॥ धम्मो वि इत्थ सिज्झइ, देवाण जईण भत्तिरागेण । ता तमि चेव पढम, पयट्टिअव्व विसेसेण ॥ २ ॥ देवो पुण इत्थ सो चेव, जो सव्वण्णू सव्वदसी अट्ठारसदोसेहिं वज्जिओ, जओ भणिअ-अण्णाण १ कोह २ मय ३ माण ४ लोह ५ माया ६ रई अ ७ अरई अ । ८ णिद्दा ९ सोग १० अलिअवयण ११ चोरिआ १२ मच्छर

---

વૃત્યર્થ–સાતે, લિંગ પ્રકરણવશથી જાણિવું છદ્મસ્થ અને કેવલીના સ્વરૂપના જણાવનારમાહિ એક–લિંગ તે છદ્મસ્થ અને કેવલી એ બિહુ ને ન હુઈ, જો તઉ નિશ્ચયે તીર્થંકર મૃષ'ભાષી અને અજ્ઞાની હુઈ સમ્યગ્પરિજ્ઞાન છતે અને સત્યવાદીપણું છતે અણુલિંગને લિંગપણિ કહણુપણાના અસંભવથી. એ ગાથાર્થ – ॥ ૫૧ ક ॥

હિવે અતિપ્રસંગે પામ્યા જે અજ્ઞાનાદિક દોષ તેહનુ તુરત અને પરંપરાઈ ફલ કહઈ છઇ–

અજ્ઞાનાદિક દોષ તે દેવસ્વરૂપના નાશક હુઇ દોષના ઉદ્‌ભાવનનુ વચન તે અવર્ણવાદ જિનેંદ્રનો

વૃત્તિનો અર્થ – હિવડા કહે પ્રકારે પામ્યા જે અજ્ઞાનાદિક દોષ તે દેવસ્વરૂપના વિધ્વંસક હુઇ અજ્ઞાનાદિકદોષ ને આશ્રયપણિ માન્યા અરિહંતને વિષે દેવસ્વરૂપની હાણિજ એ અનંતરફલ જ. દેવ તે અઢાર દોષરહિત જ હુઈ જે મારે કહિઉ છે હિવે ઇંદ્રનો લોકપાલ વૈશ્રમણુ તે અષ્ટાપદચૈત્યવાદવાને આવ્યો. ચૈત્યવાદીને ગૌતમસ્વામીને વાદે ભગવંતે પણિ ધર્મ કહીઓ ધર્મ અર્થ, અનઇ કામ પુરુષાર્થ ત્રિણિ છે લોકને વિષે ધર્મથી જે વતી મિહુ હુઇ, તે વતી ધર્મ પ્રધાન 'धम्मोवि इत्थ सिज्झई देवाण जईण भत्तिरायण । ता चेव पढम पयट्टिअव्वं विसेसेण २ ધર્મ તે ઇહા સીઝઈ દેવને અને યતીને ભક્તિરાગે, તે વતી ધર્મ ને વિષે જ પ્રવર્તવુ વિશેષે. દેવપણે ઇહા તેહજ જે સર્વજ્ઞ સર્વદર્શી અઢારદોષ રહિત જે વતી કહીઉ છે અજ્ઞાન, ક્રોધ, મદ, માન, લોભ, માયા, રતિ, અરતિ, નિદ્રા, શોક, મિથ્યાવચન, ચોરી, મત્સર, ભય, જીવહિંસા, પ્રેમ, ક્રીડાપ્રસંગ, હાસ્યાદિ એ અઢારે દોષ જેહને ટલ્યા તે દેવાધિદેવને નમુ દેવ તે અઢાર દોષે રહિત જ ઇમ કહનારનઈ એકાંતવાદનો

१३ भया य १४ ॥ १ ॥ पाणिवह् १५ पेम १६ कीलापसंग १७ हासा य १८ जस्स ए दोसा । अट्ठारसवि पणट्ठा नमामि देवाहिदेवं तं ॥ २ ॥ ' इतिश्रीउत्तराध्ययनलघुवृत्तौ । न च देवोऽष्टादशदोषरहित एवेति ब्रुवाणस्यैकान्तवादप्रवेश इति शङ्कनीयम्, तथैवानेकान्तवादस्य संस्थितेः, अनेकान्तवादस्याप्यनेकान्तत्वात् । यदुक्तम्—' स्याद्वादोऽपि न निर्दिष्ट, पापकृत्ये कृतात्मभिः । स्याद्वादस्याऽप्यनैकान्त-वादः स्याद्वादिनां मतः ॥ १ ॥ इति श्राद्धप्रतिक्रमणसूत्रस्य वृत्तौ ( सम्य० श्लो० ४०९ ) अन्यथा देवोऽर्हन्नेवेत्याद्यपि वक्तव्यं न स्यात्, तस्याप्येकान्तवादात्मकत्वादिति । ' दोसुब्भावणे ' त्यादि । दोषोद्भावनवचनमेतेषामष्टादशदोषाणा मध्ये एकस्याऽपि दोषस्योद्भावनमवर्णवादो जिनेन्द्रस्येति गाथार्थः ॥५२॥

अथ यथार्थस्वरूपभणने कोऽवर्णवाद ? इत्याशङ्कानिरासार्थं गाथाद्वयमाह—

॥ दोसत्तेण संभववयणमवण्णो हविज्ज संतस्स । दुल्लहबोहिअहेऊ ठाणंगवयणाणुसारेणं ॥ ५३ ॥

॥ ता किमसंते दोसे आरोवेऊण तस्सरूवेण । दोसुब्भावणवयणं वण्णिज्जइ केण रूवेणं ? ॥५४॥

व्याख्या—दोषत्वेन सम्भववचनमवर्णवादो भवति, अर्थात् तीर्थङ्कृतः, कस्य ? सतो-विद्यमानस्य अवर्णवादः, किंलक्षणः ? दुर्लभबोधिताहेतुः, केन ? स्थानाङ्गवचनानुसारेण, ज्ञातमिति गम्यम् । तद्वचनमाह—' पचहिं-ठाणेहिं जीवा दुल्लहबोहिअत्ताए कम्म पकरेंति । त० अरहताणं अवण्णं वदमाणे १ अरहतपण्णत्तस्स धम्मस्स अव० २ आयरियउवज्झायाणं अवण्णं० ३ चाउवण्णस्स संघस्स अवण्ण० ४ विविक्ततवबभचेराण देवाण अवण्ण० ' इति श्रीस्थानाङ्गे (सू० ४२६) एतद्वृत्तौ–'णत्थी अरिहंत त्ती,

---

प्रवेश ઇમ શંકવું નહી, તિમજ અનેકાંતવાદની મર્યાદાથી અનેકાંતવાદને પણે અનેકાંતથી. ઉક્તનો અર્થ — અનેકાંતવાદ તે પાપકાર્યને વિષે પંડિતે નથી કહ્યા. સ્યાદ્વાદનો પણિ અનેકાંતવાદ તે જૈનનઇ ઇષ્ટ છઇ. ઇમ નહી તો દેવ તે અરિહંત જ, ઇમપણિ કહિઉં ન જોઈઇ. તેહને પણિ એકાંતવાદપણાથી દોષનું ઉદ્દ્ભાવન વચન અઢાર દોષ મધ્યે એકે દોષનું કહેવું તે અવર્ણવાદ તીર્થંકરનો એ ગાથાર્થઃ ॥ ૫૨ ॥

હિવે યથાર્થસ્વરૂપ કહેતે ગ્યો અવર્ણવાદ ? એહવી શંકા ટાલવાને અર્થે ગાથા બે કહે છે—

દોષપણિ સંભવવાનું વચન તે અવર્ણવાદ હુઇ છતાનું, દુર્લભબોધિપણાનું હેતુ ઠાણાંગવચનને અનુસારે. તો અણછતાદોષ આરોપીને તે દોષને સ્વરૂપે દોષનું ઉદ્દભાવનનું વચન વર્ણવીઈ કેણે રૂપે ?.

અર્થ —દોષ પણે સંભવવચન તે અવર્ણવાદ હુઇ, અર્થથી તીર્થંકરનો. कस्य ? વિદ્યમાનનો અવર્ણવાદ કેહવો ? દુર્લભસમકિતપણાઇનો હેતુ ગ્યે કરી ? ઠાણાંગ વચનને અનુસારે જાણવું એહવું ઉપરથી જાણવું તે વચન કહે છે એહની વૃત્તિને વિષે—ઇહાં મત્યાદિજ્ઞાન ત્રિભુવનને ગૃહે વસતા અરિહંતને ભોગતે, અને કેવલજ્ઞાનની ઉત્પત્તિ ને વિષે સમવસરણાદિક સર્વેનઇ સંમત છતું તીર્થંકરે પણિ કહીઉં, તેહને અધ્યવસાયારૂઢ દોષની સંભાવનાઈ પણિ તેહની ઉદ્દભાવનામાત્રે દુર્લભબોધિપણાઈ કહી, તો અણછતા દોષ જે જીવઘાત-મિથ્યાભાષણાદિક સર્વને અણમાનવા યોગ્ય, કેવલીઇ પણિ નિષિદ્ધ, તેહને અર્થથી અરિહંતને વિષે અણછતું વિકલ્પીને દોષને સ્વરૂપે કેવલીને પણિ જીવઘાતાદિ દોષ સંભવે ઇત્યાદિ રૂપ કહેવું, તે किं એ તે વિયાગશૃં એતલે સ્યું ? કેણે રૂપે વર્ણવીઈ ? કેણે સ્વરૂપે વર્ણવી ન શકીઇ. એ અર્થ.

जाणं वा कीस भुंजए भोगे । पाहुडिअ तुवजीवइ, एमाइ जिणाण उ अवण्णो ॥ १ ॥ त्ति । अत्र हि मत्यादिज्ञानत्रयवतामर्हतां गृहे वसता भोगा., केवलज्ञानोत्पत्तौ च समवसरणादिकं सर्वेषामपि सम्मत तीर्थकृतास्युक्तम् । तस्याऽपि यदि संशयारूढदोषसम्भावनयाऽपि तदुद्भावनमात्रेण दुर्लभबोधिताऽभिहिता 'ता किं'मित्यादि । ता–तर्हि असतो दोषान् जीवघातानृतभाषणादीन् सर्वसम्मतान् केवलिनाऽपि निषिद्धान् आरोप्यासतो विकल्प्यार्थादर्हति 'तस्सरूवेण' ति, दोषस्वरूपेण- केवलिनोऽपि जीवघातादयो दोषाः सम्भवन्तीत्यादिरूपेण भणन, किमिति वितर्के, केन स्वरूपेण वर्ण्यते ? केनाऽपि स्वरूपेण वर्णयितु न शक्यत इत्यर्थः । अय भावः–प्राणातिपातादयो हि स्वरूपतो दोषत्वेन सर्वसम्मताः, अन्यथा तद्विषयकप्रत्याख्यानासम्भवात् । ते च दोषा केवलज्ञानेन सहाऽनवस्थाननियताः, 'सत्तहिं ठाणेहिं केवली जाणेज्जा, त० णो पाणे अइवाइत्ता भवती'त्यादिवचनै. केवलिनैवोक्ताः, तानेव केवलिनि वदता भवता 'केवली यथावादी तथाकर्त्ता न भवती'ति भणितम् । तद्भणनेन च केवलिस्वरूपनिरूपको भगवान् श्रीमहावीरो मृषाभाषीति भणितः । मृषाभाषण च क्रोधाद्यविनाभूत क्रोधादिजन्यत्वात् । मृषाभाषित्वे च सिद्धे सिद्धाः सर्वेऽपि दोषास्तीर्थकरेऽपि । अत एव मृषाभाषण सर्वोत्कृष्ट पापम् । यदुक्तम्—

'एकत्राऽसत्यज पाप, पाप निःशेषमेकतः ( मन्यतः ) । द्वयोस्तुलावधृतयो–राद्यमेवातिरिच्यते ॥ १ ॥' इति योगशास्त्रवृत्तौ ( प्र० २. श्लो० १०. ) यदि च कथमपि कदाचिदपि केवलिन सूक्ष्मोऽपि प्राणातिपातोऽभविष्यत्, तर्हि भगवान् श्रीमहावीरो देवादिपर्षदि सर्वजनसमक्ष 'केवली यथावादी तथाकर्त्ते'ति नाभणिष्यत् । सर्वानुभवसिद्धविरुद्धभाषणे च तत्प्रणीतस्य प्रवचनस्याप्रामाण्यापत्तौ जैनप्रव-

---

ઈહા ઉચ્છૃંખલે દ્રવ્યથી જીવઘાત તે કેવલીને દોષ જ નહી તેવતી કેવલીને દ્રવ્યથી જીવઘાતનુ નિરાકરણ તે કે શ્રાવકને માસભક્ષણના નીરાકરણની પરે કુવિકલ્પી, ઇમ લિખ્યુ છે, તે મિથ્યા જાણિવુ. યુક્તિ તો પૂર્વે લિખીજ છે એ ભાવ—પ્રાણાતિપાતાદિક તે સ્વરૂપે દોષપણિ સર્વ સમત છે નહીતર તે વિષયીઆ પચ્ચક્ખાણના અસ ભવથી ઇહા તો ઉચ્છૃંખલ તથા ઉચ્છૃંખલને સહાયદાયી સાગરનો પ્રપૌત્ર વલી અન્ય પણિ જે તદનુયાયી તે સર્વે ઉંડા ભ્રમસમુદ્ર મધ્યે બૂડા દીસે છે જે માટે દ્રવ્યહિંસાનુ પચ્ચક્ખાણ ન હુઇ તો 'णणु कह उवउत्ताणवि' ઇત્યાદિ પ્રશ્ન તેહના ઉત્તર તથા 'वज्जेमित्तीत्यादि' વાક્ય તથા અજ્ઞાત જીવઘાતાદિકે મિચ્છામિ દુક્કડાદિક પ્રાયશ્ચિત ઇત્યાદિક બહુ વિઘટન થાઇ તે જાણિવુ તે દોષ તો કેવલજ્ઞાનસઘાતે અનવસ્થાને નિશ્ચિત છે 'सत्तहिं ठाणेहिं' ઇત્યાદિવચને કેવલીઇજ કહ્યા તે દોષ પ્રતિ કહેતે, તે કેવલી જેહવુ બોલે તેહવુ ન કરે, એહવુ કહિઉ તે કહેવઇ તો કેવલીના સ્વરૂપનો નિરૂપક જે શ્રી મહાવીર ભગવત તેહે મૃષાભાષી એહવુ કહિઉ મૃષાભાષણ તો ક્રોધાદિ વિના અણથાતું, ક્રોધાદિકે જન્યપણાથી, મૃષાભાષીપણુ સિદ્ધ થાતે તો સિદ્ધ થયા સર્વે દોષ તીર્થકરને વિષે

એતલાજ વતી મૃષાભાષણ તે સર્વોત્કૃષ્ટ પાપ જે માટે કહિઉ છે 'એકત્ર મિથ્યાભાષણનું પાપ અને એક પાસે સકલ પાપ એ બિહુ તુલાઇ ધર્યા હુતા પ્રથમ તે અધિક થાઇ' જો કિમે' કિવારે' પણિ કેવલીને સૂક્ષ્મે પ્રાણાતિપાત હઉત, તઉ ભગવત શ્રી મહાવીર તે દેવાદિકની પર્ષદાને વિષે સર્વજન સમક્ષ કેવલી જેહવુ બોલે તેહવુ કરે ઇમ ન કહેત. સર્વને અનુભવસિદ્ધ મૃષાભાષણે તો તેહના પ્રરૂપ્યા પ્રવચનને અપ્રામાણ્યપણાની આપત્તિ થઇ હુતે જૈનપ્રવચન તે અનાદરણીય હુઈ. મૃષાભાષીઇ પ્રરૂપ્યાથી;

चनमेवाऽनुपादेयं स्यात्, मृषाभाषिप्रणीतत्वात्। तस्मात्केवलिनः स्वल्पस्याऽपि प्राणातिपातादेर्भणनं सर्वेषामप्यर्हदादीनामवर्णवादः सम्पद्येत, सर्वेषामप्यन्योऽन्यानुविद्धत्वेन सम्बन्धात्। तेन तथाभूतस्यावर्णवादो वक्तुर्दूरभव्यत्वाभिव्यञ्जकोऽवसातव्य इति गाथायुग्मार्थः ॥ ५३–५४ ॥

अथाल्पदोषसद्भावेऽष्टादशदोषराहित्य न विरुद्ध्यते, अल्पदोषस्याभावत्वेन विवक्षितत्वादिति पराशङ्कायामाह—

॥ अट्ठारसदोसाणं दोसो एगोवि तस्स ते सव्वे। अण्णुण्णं अणुविद्धा जं ते मोहाविणाभूआ ॥५५॥

व्याख्या—अष्टादशदोषाणा मध्ये, यस्येति गम्यम्, एकोऽपि दोषो भवेत्, तस्य सर्वेऽप्यज्ञानादयो दोषाः अन्योऽन्य–परस्परमनुविद्धा–एकीभावेन सम्बद्धा भवन्ति। तत्र हेतुमाह—'ज ते'त्ति। यद्–यस्मात्ते दोषाः अज्ञानादयो मोहाविनाभूताः–मोहनीयकर्मजन्या इत्यर्थः। न च क्षीणमोहस्य मोहनीयसत्तामन्तरेणाप्यज्ञानलक्षणस्य प्रथमदोषस्य विद्यमानत्वेन व्यभिचारः शङ्कनीयः, क्षीणमोहस्याज्ञानाभावात्। अज्ञान हि कुत्सितज्ञानं, नञ. कुत्सार्थत्वात्। तच्चाशुचिमिथ्यात्वसम्पर्कान्मिथ्यादृशामेव भवति, मिथ्यात्वयोगात् ज्ञानस्याप्यज्ञानत्वेन परिणमनात्। 'मिच्छादिट्ठिस्स अण्णाण'मितिवचनात्। सम्यग्दृशा तु विवक्षित-

---

ते वती केवलीने अल्प प्राणातिपातादिकनु कहेवु ते सर्वे अर्हदादिकने अवर्णवाद संपजे सर्वने माहोमाहि अनुविद्धपणे संबंधथी. तेणे करी तेहवानो अवर्णवाद ते कहेनारने दूरभव्यपणानो जणावनार जाणिवो. ए गाथा बेनो अर्थ. ॥ ५३–५४ ॥

हिवे अल्पदोषसद्भावे अष्टादशदोषे रहितपणु विरुद्ध नही, अल्पदोषने अभावे पणि विवेख्यापणाथी. ए परनी आशंकाने विषई कहई छइ—

अढारदोष मध्येथी एक दोष जेहने, तेहने ते सर्व दोष हुइ. जे माटे माहोमाहि संबद्ध छे. मोहविना न हुइ वती

अर्थ—अढार दोष मध्ये जेहने एक दोष हुइ, तेहनइ ते सर्वे अज्ञानादिक दोष, माहोमाहि अनुविद्ध–एकपणे संबद्ध छे. तिहां हेतु कहई छई–जे मारि ते अज्ञानादिक दोष मोह विना न हुई मोहनीयकर्मईजन्य ए अर्थ. क्षीणमोहने मोहनीयनी सत्ता विना पणि अज्ञानरूप प्रथम दोषने विद्यमानपणे करी व्यभिचार न शंकवो. क्षीणमोहने अज्ञानना अभावथी ते तो अशुचि जे मिथ्यात्व तेहना संबंधथी मिथ्यात्वीने ज हुई, मिथ्यात्वना योगथी ज्ञाननई पणि अज्ञान पणि परिणमनथी 'मिथ्यादृष्टीने अज्ञान' ए वचनथी सम्यग्दृष्टीने तो विवेख्या पदार्थ विषयीओ आभोग अने अनाभोग ते मध्ये एकज हुई. पूछे छइ–अज्ञान अने अनाभोग एहने स्यो भेद? एहवु जउ ते उपरी कहीइ छे

अज्ञान ते कुत्सितज्ञान अने ते तउ मिथ्यात्वीने ज हुई ते मिथ्यात्वीने ज स्वसंबंधथी मिथ्यात्वमोहनीयना उदयवशे छतु अने अणछतु तेहना अविशेषे भासवाथी, नसागना कारणथी, अने वली ज्ञानफलना अभावथी. 'सत अने असतना अविशेषथी, भवहेतुथी, यथेच्छाई पाम्याथी, ज्ञानफल जे विरति. तेहना अभावथी मिथ्यात्वीने अज्ञान ज जाणवु' एतला ज वती मिथ्यात्वीने पोते अंगी-

पदार्थविषयकयोराभोगानाभोगयोरन्यतर एव स्यात । ननु भो ! अज्ञानानाभोगयो को भेद ? इति चेत् । उच्यते–अज्ञान हि कुत्सितज्ञानम् । तच्च मिथ्यादृशामेव स्यात् , तेषामेव विपाकतो मिथ्यात्वमोहनीयोदयवशेन सदसतोरविशेषेण प्रतिभानात् संसारकारणत्वात् ज्ञानफलाभावाच्च । यदुक्तम्—

'सदसदविसेसणाओ भवहेउ जहिच्छिओवलभाओ। णाणफलाभावाओ मिच्छाहिट्ठिस्स अण्णाण' ॥ १ ॥ ति विशेषावश्यके ( गा० २८४४ ) अत एव मिथ्यादृशा स्वाभिमतमार्गजैनमार्गयोरुत्तमत्वानुत्तमत्वाभ्या वैपरीत्येन श्रद्धाने सत्यपि स्वाभिमतमार्गातिरिक्तमार्गो जैनमार्गश्चेत्युभयोरविशेषेणाभ्युपगमोऽज्ञानमेव। अनाभोगस्तु नञो ह्यभाववाचित्वेन दिवक्षितपदार्थविषयकाववोधाभाव । स च सम्यग्दृशामपि भवति, छद्मस्थमात्रस्य तस्य सत्त्वात् । यदुक्तम्—'नहि नामानाभोगश्छद्मस्थस्येह कस्यचिन्नास्ति। ज्ञानावरणीय हि ज्ञानावरणप्रकृति कर्म' ॥१॥ इति । तेन सम्यग्दृष्टिमात्रस्य केवलज्ञानोत्पत्ति यावत् सामान्यतोऽनाभोगो भवत्येव, अन्यथा सर्वज्ञत्व सम्पद्येत, सर्वथाऽनाभोगाभाववत एव सर्वज्ञत्वात् । यद्यपि क्षायोपशमिकसम्यग्दृष्टेः प्रदेशतो मिथ्यात्वोदयवशेन कदाचित् कचिदशे विपरीतावबोधोऽपि सम्भवति, तथापि स तथाभूतोऽवबोधो विपाकतो मिथ्यात्वमोहनीयानुदयेन नाज्ञानरूपः, किन्तु अनाभोगमूलकत्वात् अनाभोग एव । यदागमः—

'सम्मद्दिट्ठी जीवो उवइट्ठ पवयण तु सद्दहइ । सद्दहइ असब्भाव अणभोगा गुरुनिओगा वा', ॥ १ ॥ इति श्रीउत्त० नि० ( गा० १६३ ) अनाभोगमूलको हि विपरीतावबोधः सूक्ष्मातिचाररूपोऽपि निष्फल एव, सम्यग्दृष्टित्वेन सम्यग्वक्तारमासाद्य तत्क्षणमेवापगमात् । सम्यग्दृष्टेस्तु तीर्थकृद्भाषित सर्वं सम्यगेवेतिरूपेण तीर्थकृद्द्वारा सर्ववस्तुविषयकसम्यग्श्रद्धानोपहतत्वाच्च विपाकतो मिथ्यात्वानुदयेन आशयस्य शुद्धत्वात् । यथा वर्जनाभिप्रायोपहतो जीवघातोऽप्रमत्तसंयताना निष्फलः, सयमपरिणामेनाऽऽश-

---

कृत–માર્ગ અને જૈનમાર્ગ તેહને ઉત્તમપણે અને અનુત્તમપણે કરી વિપરીતપણે શ્રદ્ધાનથિકે પણિ પોતે માન્યા માર્ગથી અતિરિક્ત જે માર્ગ અને જૈનમાર્ગ તે બિહુને અવિશેષપણિં માનવુ, તે અજ્ઞાન જ. અનાભોગ તો નઞ્ને અભાવવાચીપણે કરી વિવેખ્યા પદાર્થ વિષયીઓ અવબોધનો અભાવ. અને તે તો સમ્યગ્દષ્ટીને પણિ હુઈ છદ્મસ્થમાત્રને છતાપણાથી 'છદ્મસ્થને કુણેકે અનાભોગ નથી ઇમ નહી જે માટે જ્ઞાનાવરણીય તે જ્ઞાનતું આવારકસ્વભાવ કર્મ છઈ,' તે વતી સમ્યગ્ દૃષ્ટિમાત્રને કેવલજ્ઞાન ન ઉપજે તિંહાતાંઈ સામાન્યથી અનાભોગ હુઈ જ. ઇમ નહી તો સર્વજ્ઞપણું ઊપજે. સર્વથા અનાભોગના અભાવવતને સર્વજ્ઞપણાથી

જઉ એ ક્ષાયોપશમિક સમ્યગ્–દષ્ટીને પ્રદેશથી મિથ્યાત્વને ઉદયને વશે કિવારેકિં કુણેકં અશે વિપરીત જ્ઞાનપણિ સભવે, તઉહે તેહવો અવબોધ તે વિપાકથી મિથ્યાત્વને અનુદયે કરી અજ્ઞાનરૂપ નહી. તઉ સ્યુ ? અનાભોગમૂલપણાથી અનાભોગ જ જે માટે આગમ–સમ્યગ્દષ્ટિ જીવ, કહિઉં પ્રવચન સદ્દહે અને અસદ્ભાવને સદ્દહે અનાભોગથી, અથવા ગુરુનિયોગથી અનાભોગથી ઉપનો જે વિપરીત જે અવબોધ, તે સૂક્ષ્મઅતિચારરૂપ પણિ નિઃફલજ. સમ્યગ્દષ્ટિપણિ કરી સમ્યગ્ કથનને પામીનઈ તત્કાલજ જાવાથી. સમ્યગ્દષ્ટિને તો તીર્થકરનુ ભાખ્યુ સર્વ ભલુ જ, ઇણિં રૂપે તીર્થકર દ્વારાઈ સર્વ વસ્તુ વિષયીઉ જે સમ્યગ્ શ્રદ્ધાન તેણિ તે અનાભોગને ઉપહતપણાથી, વિપાકથી મિથ્યાત્વને અનુદયે કરી ભાવને શુદ્ધપણાથી જિમ વર્જના અભિપ્રાયે ઉપહત જીવઘાત તે અપ્રમત્તસંયતને નિઃફલ,

यस्य शुद्धत्वात्। उत्सूत्रभाषिणा तु सम्यक्त्वाभावेनोक्तयुक्तेस्तत्रावतारो न भवतीत्यग्रे वक्ष्यत इति। तस्मात्क्षीणमोहमात्रस्याष्टादशदोषाणां मध्ये एकोऽपि दोषो न भवेत्। यतः फलवत्तया एकस्याऽपि दोषस्य सद्भावे [ फलोपहितयोग्यता ] हेतुस्वरूपयोग्यतया सर्वेऽपि भवन्ति। मोहनीयजन्यत्वेनान्योऽन्यानुविद्धत्वादिति गाथार्थः ॥ ५५ ॥

अथ केवलिनो जीवघातादौ गुणदोषविषयकप्रश्नद्वयोद्भावनेनावर्णवादमाविष्कुर्वन्नाह—

॥ किं केवलिणो दोसा अहव गुणा जीववहमाईणि। दुहओ अवण्णवाओ कलंकदाणेण केवलिणो ॥

व्याख्या—केवलिनो जीववधादीनि-केवलियोगजन्यप्राणातिपातादीनि किं दोषा अथवा गुणाः? इति प्रश्नद्वयनिर्वचनेऽवर्णवादो, यथा-यदि भणति दोषोस्तर्हि दोषोद्भावनेनावर्णवादः. यदि गुणास्तर्हि दोषाणामुच्छेदापत्त्या जगत्स्थितिमुल्लङ्घ्य ब्रुवाणोऽनार्यवाक् स्वात्मनः केवलिनश्च महापभ्राजनाहेतुरिति द्विधाऽपि कलङ्कदानेन केवलिनोऽवर्णवादः। एवमनुभयस्वभावेऽपि बोध्यम्, जगत्स्थितिमुल्लङ्घ्य वक्तृत्वादिति गाथार्थः ॥ ५६ ॥

अथ केवलिनो जीतघातादौ वक्तव्ये यावन्तोऽतिप्रसङ्गा दर्शितास्तेषामधिकरणभेदेन परिणतिस्वरूपमाह—

॥ एवं अइप्पसंगा भणिआ ते चेव हुंति उस्सुत्तं। जीववहं केवलिणो वुच्चंताणं जिणस्सावि ॥५७॥

व्याख्या—एवम्-अनन्तरोक्तप्रकारेण अतिप्रसङ्गा यत्तदोर्नित्याभिसम्बन्धात्, ये 'ते चेव'त्ति त एव उत्सूत्र भवति, केषां? केवलिनो 'जीववह'त्ति जीवघातो भवतीत्येवंरूपेण जीववध ब्रुवता

---

સયમપરિણામે કરી આશયને શુદ્ધપણાથી. ઉત્સૂત્રભાષીને સમ્યક્ત્વ ને અભાવે કહી યુક્તિ તો તિહા અવતાર ન હુઈ એહવુ આગલિ કહિસ્યઈ, તે માટે ક્ષીણમોહમાત્રને અઢર દોષમધ્યે એક દોષ ન હુઇ, જે માટિં ફલવત પણિ એક દોષને સદ્ભાવે સ્વરૂપયોગ્યતાઈ સર્વે હુઈ એ ગાથાર્થ ॥ ૫૫ ॥

હિવે કેવલીને જીવઘાતાદિકને વિષે ગુણ અને દોષ વિષયીઆ જે બિ પ્રશ્ન, તેહને કહેવે કરીને અવર્ણવાદ પ્રતે પ્રગટ કરતો કહે છે—

સ્યુ જીવઘાતાદિક તે કેવલીને દોષ અથવા ગુણ? બિહુ પ્રકારઇ અવર્ણવાદ કેવલીનઈ કલકદાનઇ કરી.

વૃત્તિનો અર્થ – કેવલીને યોગે જન્ય જે પ્રાણાતિપાતાદિક તે દોષ અથવા ગુણ? એ બે પ્રશ્નને ઉત્તરે અવર્ણવાદ. જિમ જઉ કહે દોષ, તિમ તઉ દોષને પ્રગટ કરવે અવર્ણવાદ. જઉ ગુણ, તઉ દોષને ઉચ્છેદની પ્રાપ્તિથી જગની સ્થિતિ ઉલ્લંઘીને બોલતો અનાર્યવચનનો ભાષક પોતાને અને કેવલીને મહાનિંદાનો હેતુ એમ બિહુ પ્રકારે કલકદાને અવર્ણવાદ, ઇમ ગુણ-દોષસ્વભાવરહિતપણુ માનતે પણિ જાણવુ જગની સ્થિતિ ઉલ્લઘીને બોલવાપણાથી એ ગાથાનો અર્થ ॥ ૫૬ ॥

હિવે કેવલીને જીવઘાતાદિક કહેતે જેતલા દૂષણ દેખાડયા તેહને અધિકરણને ભેદે પરિણમ્યાનું સ્વરૂપ કહે છે—

ઇમ અતિપ્રસંગ જે કહ્યા પૂર્વે તે હુઇ ઉત્સૂત્રે, જીવવધ કેવલીને કહેનારને અને જિનને પણિ.

વૃત્તિનો અર્થ – ઇમ પૂર્વે કહ્યા અતિપ્રસગ દૂષણ યત્તદ્ શબ્દને નિત્યે સંબધથી જે, તેહજ ઉત્સૂત્ર હુઈ. કુહને? કેવલીને જીવઘાત હુઇ એહવુ કહેનાર જે લબાડ તેહને. તિમ જિનકેવલીને

वाचालानाम् । तथा जिनस्याऽपि-केवलिनोऽपि । परं केवलिनोऽप्रतिलेखितशरीरादिव्यापारेण प्रवृत्तिरूपं 'सत्तहिं ठाणेहिं केवली जाणेज्जा' इत्यादिप्रज्ञापनेन वचनरूपं चेति द्वेधाप्युत्सूत्र वाचालेनाऽऽरोपितं भवति । वाचालस्य तु केवलिनोऽन्यथास्वरूपमापणेन वचनरूपमपि वास्तवमेवेत्येवरूपेण भेदोऽधिकरण-भेदेन परिणत्या दर्शित इति गाथार्थ ॥ ५७ ॥

अथ केवलिप्रकरणोपसंहारेण सामान्यतो भव्यानां शिक्षामाह—

॥ इअ सम्मं सद्दिट्ठी जिणिंदआणापरायणो जो सो । पडिवज्जउ केवलिणं णिद्दोसं सुद्धबुद्धीए ॥५८॥

व्याख्या— इति—अमुना प्रकारेण सम्यग् यथास्यात्तथा सद्दृष्टिः—सती—शोभना दृष्टिः—श्रद्धान यस्य स सद्दृष्टिः सम्यग्दृष्टिरित्यर्थः । किंभूतो ? जिनाज्ञापरायणः—जिनोक्तमार्गानुष्ठानोद्यतस्तच्चिकीर्षुर्वा, स निर्दोषमज्ञानाद्यष्टादशदोषरहित प्रतिपद्यता—मोक्षदायकबुद्ध्या केवलिनमाश्रयतु, कया ? शुद्धबुद्ध्या शुद्धा—शङ्कादिदोषरहिता या बुद्धिस्तयेति श्रोतु शिक्षेति गाथार्थः ॥ ५८ ॥

---

પણિ. પણિ કેવલીને અણુપડિલેહિઉ જે શરીર તે પ્રમુખની ક્રિયાઈ પ્રવૃત્તિ રૂપ અને સાતે ઠિન્હે કેવલી જાણુવો ઈત્યાદિક પ્રરૂપણે વચન રૂપ. ઇમ બિપ્રકારિ ઉત્સૂત્ર વાચાલે આરોપ્યુ છે. વાચાલને તઉ કેવલીને અન્યથા સ્વરૂપને ભાખવે' કરી વચન રૂપ પણિ વસ્તુગતિજ. એણે રૂપે ભેદ તે આશ્રવ(ય)ને' પરિણામે કરી દેખાડ્યો, એ ગાથાને અર્થ. ॥ ૫૭ ॥

હિવે કેવલીના પ્રકરણને ઉપસંહરવે કરી સામાન્યથી ભવ્ય જીવને શિક્ષા કહે છે—

ઇમ સમ્યગ્ પ્રકારે સમ્યગ્દર્શની જિનેદ્રની આજ્ઞાને વિષે તત્પર જે, તે અંગીકાર કરઉ, કેવલી નિર્દોષ એહવા પ્રવિશુદ્ધ બુદ્ધિ કરી.

વૃત્તિનો અર્થ — ઇણે પ્રકારે સમ્યગ્ જિમ હુઇ તિમ ભલી દૃષ્ટિ કહેતા શ્રદ્ધાન જેહનુ એતલે સમ્યગ્દષ્ટિ એ અર્થ કેહવો ' જિને ઉક્ત કહ્યો જે માર્ગ તેહની ક્રિયાને વિષે ઉદ્યત, તેહને કરિવા વાછતો, તે અજ્ઞાનાદિ અઢારદોષરહિત મોક્ષનો દાતાર એ બુદ્ધિ આશ્રઓ. સ્યે કરી ' શુદ્ધ જે શંકાદિદોષે રહિત જે બુદ્ધિ, તેણીઈ સાભલનારને સીખામણ એ ગાથાનો અર્થ ॥ ૫૮ ॥

શ્રીમત્તપોગચ્છાધિરાજ ભટ્ટારક શ્રી વિજયસેનસૂરીશ પટ્ટાલંકાર સુવિહિત સાધુ પરંપરા સુંદરી શૃંગારહાર ભટ્ટારક શ્રી ગજસાગરસૂરીશ્વર પટ્ટોદયાચલ સહસ્રકિરણતરુણપ્રભાવો ભટ્ટારક શ્રી વૃદ્ધિસાગરસૂરીશ્વર વિજયમાન ગચ્છે મહોપાધ્યાય શ્રી ધર્મસાગર ગણિ શિષ્ય મુખ્યોપાધ્યાય શ્રી શ્રુતસાગર ગણિ શિષ્યરત્ન-કલિદિકાશ્રયોપાધ્યાય શ્રી ૫ શાંતિસાગર ગણિ શિષ્ય સકલગુણગરિષ્ઠ વાચક શ્રી બુદ્ધિસાગરગણિ સતીર્થ્ય પંડિત શ્રી અમૃતસાગર ગણિ વિરચિતે શ્રી સર્વજ્ઞશતકવૃત્તિબાલાવબોધે પ્રથમોઽધિકારઃ.

संवद्रसाब्धिसप्तेन्दु पौषे असितपक्षके । नवमी भौमवारे हि लिखिता पत्तने पुरे ॥
॥ शिवमस्तु ॥ कल्याणमस्तु ॥

यस्य शुद्धत्वात्। उत्सूत्रभाषिणा तु सम्यक्त्वाभावेनोक्तयुक्तेस्तत्रावतारो न भवतीत्यग्रे वक्ष्यत इति। तस्मात्क्षीणमोहमात्रस्याष्टादशदोषाणा मध्ये एकोऽपि दोषो न भवेत्। यतः फलवत्तया एकस्याऽपि दोषस्य सद्भावे [ फलोपहितयोग्यता ] हेतुस्वरूपयोग्यतया सर्वेऽपि भवन्ति। मोहनीयजन्यत्वेनान्योऽन्यानुविद्धत्वादिति गाथार्थः ॥ ५५ ॥

अथ केवलिनो जीवघातादौ गुणदोषविषयकप्रश्नद्वयोद्भावनेनावर्णवादमाविष्कुर्वन्नाह—

॥ किं केवलिणो दोसा अहव गुणा जीववहमाईणि। दुहओ अवण्णवाओ कलंकदाणेण केवलिणो ॥

व्याख्या—केवलिनो जीववधादीनि-केवलियोगजन्यप्राणातिपातादीनि किं दोषा अथवा गुणाः? इति प्रश्नद्वयनिर्वचनेऽवर्णवादो, यथा-यदि भणति दोषोस्तर्हि दोषोद्भावनेनावर्णवादः. यदि गुणास्तर्हि दोषाणामुच्छेदापत्त्या जगत्स्थितिमुल्लङ्घ्य ब्रुवाणोऽनार्यवाक् स्वात्मनः केवलिनश्च महापभ्राजनाहेतुरिति द्विधाऽपि कलङ्कदानेन केवलिनोऽवर्णवादः। एवमनुभयस्वभावेऽपि बोध्यम्, जगत्स्थितिमुल्लङ्घ्य वक्तृत्वादिति गाथार्थः ॥ ५६ ॥

अथ केवलिनो जीतघातादौ वक्तव्ये यावन्तोऽतिप्रसङ्गा दर्शितास्तेषामधिकरणभेदेन परिणतिस्वरूपमाह—

॥ एवं अइप्पसंगा भणिआ ते चेव हुंति उस्सुत्तं। जीववहं केवलिणो वुच्चंताणं जिणस्सावि ॥५७॥

व्याख्या—एवम्-अनन्तरोक्तप्रकारेण अतिप्रसङ्गा यत्तदोर्नित्याभिसम्बन्धात्, ये 'ते चेव'त्ति त एव उत्सूत्र भवति, केषा? केवलिनो 'जीववहं'ति जीवघातो भवतीत्येवंरूपेण जीववधं ब्रुवता

---

સંયમપરિણામે કરી આશયને શુદ્ધપણાથી. ઉત્સૂત્રભાષીને સમ્યક્ત્વ ને અભાવે કહી યુક્તિ તો તિહા અવતાર ન હુઈ. એહવુ આગલિ કહિસ્યઈ, તે માટે ક્ષીણમોહમાત્રને અઢર દોષમધ્યે એક દોષ ન હુઇ, જે માટિં ફલવત પણિ એક દોષને સદ્ભાવે સ્વરૂપયોગ્યતાઈ સર્વે હુઈ એ ગાથાર્થ. ॥ ૫૫ ॥

હિવે કેવલીને જીવઘાતાદિકને વિષે ગુણ અને દોષ વિષયીઆ જે બિં પ્રશ્ન, તેહને કહેવે કરીને અવર્ણવાદ પ્રતે પ્રગટ કરતો કહે છે—

સ્યુ જીવઘાતાદિક તે કેવલીને દોષ અથવા ગુણ? બિહુ પ્રકારઇ અવર્ણવાદ કેવલીનઈ કલંકદાનઇ કરી.

વૃત્તિનો અર્થ – કેવલીને યોગે જન્ય જે પ્રાણાતિપાતાદિક તે દોષ અથવા ગુણ? એ બે પ્રશ્નને ઉત્તરે અવર્ણવાદ. જિમ જઉ કહે દોષ, તિમ તઉ દોષને પ્રગટ કરવે અવર્ણવાદ. જઉ ગુણ, તઉ દોષનેં ઉચ્છેદની પ્રાપ્તિથી જગની સ્થિતિ ઉલ્લંઘીને બોલતો અનાર્યવચનનો ભાષક પોતાને અને કેવલીને મહાનિંદાનો હેતુ એમ બિહુ પ્રકારે કલંકદાને અવર્ણવાદ, ઇમ ગુણ-દોષસ્વભાવરહિતપણુ માનતે પણિ જાણવુ જગની સ્થિતિ ઉલ્લઘીને બોલવાપણાથી. એ ગાથાનો અર્થ ॥ ૫૬ ॥

હિવે કેવલીનેં જીવઘાતાદિક કહેતે જેતલા દૂષણ દેખાડયા તેહને અધિકરણને ભેદે પરિણમ્યાનું સ્વરૂપ કહે છે—

ઇમ અતિપ્રસંગ જે કહ્યા પૂર્વે તે હુઇ ઉત્સૂત્રે, જીવવધ કેવલીને કહેનારનેં અને જિનને પણિ.

વૃત્તિનો અર્થ – ઇમ પૂર્વે કહ્યા અતિપ્રસંગ દૂષણ યત્તદ્ શબ્દને નિત્યે સંબંધથી જે, તેહજ ઉત્સૂત્ર હુઈ. કુહને? કેવલીને જીવઘાત હુઇ એહવુ કહેનાર જે લમાઉ તેહને. તિમ જિનકેવલીને

वाचालानाम् । तथा जिनस्याऽपि-केवलिनोऽपि । पर केवलिनोऽप्रतिलेखितशरीरादिव्यापारेण प्रवृत्तिरूपं 'सत्तहिं ठाणेहिं केवली जाणेज्जा' इत्यादिप्रज्ञापनेन वचनरूप चेति द्वेधाप्युत्सूत्र वाचालेनाऽऽरोपितं भवति । वाचालस्य तु केवलिनोऽन्यथास्वरूपभाषणेन वचनरूपमपि वास्तवमेवेत्येवरूपेण भेदोऽधिकरण-भेदेन परिणत्या दर्शित इति गाथार्थ ॥ ५७ ॥

अथ केवलिप्रकरणोपसंहारेण सामान्यतो भव्याना शिक्षामाह—

॥ इअ सम्मं सद्दिट्ठी जिणिंदआणापरायणो जो सो । पडिवज्जउ केवलिणं णिद्दोसं सुद्धबुद्धीए ॥५८॥

व्याख्या— इति-अमुना प्रकारेण सम्यग् यथास्यात्तथा सद्दृष्टिः-सती-शोभना दृष्टिः-श्रद्धान यस्य स सद्दृष्टिः सम्यग्दृष्टिरित्यर्थ' । किंभूतो ? जिनाज्ञापरायणः-जिनोक्तमार्गानुष्ठानोद्यतस्तच्चिकीर्पुर्वा, स निर्दोपमज्ञानाद्यष्टादशदोषरहित प्रतिपद्यता-मोक्षदायकबुद्ध्या केवलिनमाश्रयतु, कया ? शुद्धबुद्ध्या शुद्धा-शङ्कादिदोपरहिता या बुद्धिस्तयेति श्रोतु शिक्षेति गाथार्थः ॥ ५८ ॥

---

પણિ. પણિ કેવલીને અણુપડિલેહિઉ જે શરીર તે પ્રમુખની ક્રિયાઈ પ્રવૃત્તિ રૂપ અને સાતે ઠિન્હે' કેવલી જાણુવો ઈત્યાદિક પ્રરૂપણે વચન રૂપ. ઇમ બિપ્રકારિ ઉત્સૂત્ર વાચાલે આરોપ્યુ છે. વાચાલને તઉ કેવલીને અન્યથા સ્વરૂપને ભાખવે કરી વચન રૂપ પણિ વસ્તુગતિંજ એણે રૂપે ભેદ તે આશ્રવ(૫)ને' પરિણામે કરી દેખાડ્યો, એ ગાથાનો અર્થ ॥ ૫૭ ॥

હિવે કેવલીના પ્રકરણને ઉપસહરવે કરી સામાન્યથી ભવ્ય જીવને શિક્ષા કહે છે—

ઇમ સમ્યગ્ પ્રકારે સમ્યગ્દર્શની જિનેદ્રની આજ્ઞાને વિષે તત્પર જે, તે અગીકાર કરઉ, કેવલી નિર્દોષ એહવા પ્રવિશુદ્ધ બુદ્ધિ કરી.

વૃત્તિનો અર્થ—ઇણે પ્રકારે સમ્યગ્ જિમ હુઈ તિમ ભલી દૃષ્ટિ કહેતા શ્રદ્ધાન જેહનુ એતલે સમ્યગ્દષ્ટિ એ અર્થ કેહવો ' જિને ઉક્ત કહ્યો જે માર્ગ તેહની ક્રિયાને વિષે ઉદ્યત, તેહને કરિવા વાછતો, તે અજ્ઞાનાદિ અઢારદોષરહિત મોક્ષનો દાતાર એ બુદ્ધિ આશ્રઓ. સ્યે કરી ' શુદ્ધ જે શકાદિદોષે રહિત જે બુદ્ધિ, તેણીઈ સાભલનારને સીખામણ એ ગાથાનો અર્થ ॥ ૫૮ ॥

શ્રીમત્તપોગચ્છાધિરાજ ભટ્ટારક શ્રી વિજયસેનસૂરીશ પટ્ટાલકાર સુવિહિત સાધુ પરપરા સુદરી શૃંગારહાર ભટ્ટારક શ્રી રાજસાગરસૂરીશ્વર પટ્ટોદયાચલ સહસ્રકિરણતરુણપ્રભાવો ભટ્ટારક શ્રી વૃદ્ધિસાગરસૂરીશ્વર વિજયમાન રાજ્યે મહોપાધ્યાય શ્રી ધર્મસાગર ગણિ શિષ્ય મુખ્યોપાધ્યાય શ્રી શ્રુતસાગર ગણિ શિષ્યરત્ન-કલિદિકાશ્રયોપાધ્યાય શ્રી ૫ શાતિસાગર ગણિ શિષ્ય સકલગુણગરિષ્ઠ વાચક શ્રી બુદ્ધિસાગરગણિ સતીર્થ્ય પડિત શ્રી અમૃતસાગર ગણિ વિરચિતે શ્રી સર્વજ્ઞશતકવૃત્તિબાલાવબોધે પ્રથમોઽધિકાર.

संवद्रसाब्धिसप्तेन्दु (६ ४ ७ १) पौषे असितपक्षके । नवमी भौमवारे हि लिखिता पत्तने पुरे ॥
॥ शिवमस्तु ॥ कल्याणमस्तु ॥

अथ शिक्षामेव किञ्चिद्विशेषेण व्यनक्ति—

॥ पडिवज्जिअ केवलिणं केवलिवयणेण कुणउ जिणधम्मं । सो वि तिह करणकारणणुमोअणभेअओ णेओ ॥

व्याख्या—केवलिनं प्रतिपद्य-शरणीकृत्य केवलिवचनेन-जिनाज्ञया जिनधर्म करोतु-विदधातु, सोऽपि-जिनधर्मोऽपि त्रिधा-त्रिप्रकारः करण-कारणाऽ-नुमोदनाभेदतः । तत्र करणं स्वयं ज्ञानादिषु प्रवृत्तिः, कारणमुपदेशादिना परैः, अनुमोदना च मनोवाक्कायैः कृतकारितानुमतिविषयकात्मोत्साहरूपा तन्मूलकतदनुरूपवाक्प्रवृत्तिरूपा च । तत इतरेतरद्वन्द्वः । ताभिर्भेदो-विवेकस्तत करणकारणनुमोदना-भेदता ज्ञेयो-ज्ञातव्य इति गाथार्थ ॥ ५९ ॥

अथ त्रयाणामपि भेदानां मध्ये को भेदः प्रधानम् ? इति जिज्ञासायामाह—

॥ तत्थवणुमोअणा खलु मूलं धम्मस्स हरिसमूलागा । सा णिअमा भव्वाणं अण्णं अण्णेसिमवि हुज्जा ॥

व्याख्या—तत्राऽपि-तास्वपि-करणकारणानुमोदनासु तिसृष्वपि अनुमोदना, खलुरवधारणे, अनुमोदनैव, प्रधानमिति गम्यम् । कुत ? इति विशेषणद्वारा हेतुमाह-यतः साऽनुमोदना किंलक्षणा ?, धर्मस्य मूलम्-आदिकारण, तत्राऽपि विशेपणद्वारा हेतुमाह—यतः सा हर्षमूलिका हर्षो-चित्तोत्साहो मूल यस्याः सा तथा, चित्तोत्साहमन्तरेणानुमोदना न भवतीत्यर्थः । तेन साऽनुमोदना नियमात् भव्याना-

---

અથ દ્વિતીયોઽધિકાર.

હવે કાંઇક વિશેષથી શિખામણ જણાવે છે—

મૂલનો અર્થ — પડિવત્તી-શરણુ કરીનઇ કેવલી પ્રતઇ-કેવલજ્ઞાની પ્રતઇ કેવલીજિન તેહની આજ્ઞાઇ કરીનઈ કરઉ જિનધર્મ પ્રતઇ-જિનના પ્રકાસ્યા ધર્મ પ્રતઇ તેહજ જિનધર્મ ત્રિણિ પ્રકારે પોતેઈ કરવઇ. કરીનઇ ૧, ઉપદેશ દેવઈ કરીનઇ પરપાસઈ કરાવવુ ધર્માનુષ્ઠાન ૨, અનઈ કર્યા કરાવ્યા જે ધર્માનુષ્ઠાન તેહનઈ વિષય ચિત્તનો હર્ષ અનઈ તેહની વચનપ્રવૃત્તિરૂપ જે અનુમોદના ૩ ભેદચિક્રે જાણવો ॥૫૯॥

વૃત્તિનો અર્થ — કેવલી ભગવંતને સ્વીકારીને-શરણુ કરીને કેવલિભગવંતના વચન વડે-જિનેશ્વરની આજ્ઞા વડે જિનધર્મને કરો તે જિનધર્મ પણ કરવુ કરાવવુ અને અનુમોદના ભેદથી ત્રણ પ્રકારે છે। તેમા કરવુ-સ્વયં જ્ઞાન આદિમા પ્રવર્ત્તવુ કરાવવું-ઉપદેશ આદિ વડે બીજા પાસે અનુમોદવુ-કૃત-કારિત-અનુમતિ વિષયક આત્માનો ઉત્સાહ અને તે મૂલક તેને યોગ્ય વચનની પ્રવૃત્તિ. ॥૫૯॥

હવે ત્રણ ભેદોની અંદર કયો ભેદ પ્રધાન છે ? તે જણાવે છે—

મૂલનો અર્થ — તે ત્રિણિ ભેદનઈ વિષય અનુમોદના ખલુ-નિશ્ચય, તેહિજ પ્રધાન કારણઇ. ધર્મનુ મૂલ છઈ. તે અનુમોદના કેહવી છઈ ? ચિત્તનો-આત્માનો ઉત્સાહ તે મૂલ છઇ જેહનુ એહવી તે અનુમોદના **निअमी (मा)** નિશ્ચય આસન્નમુક્તિ ૧, સમ્યગ્દૃષ્ટિ ૨ અનઈ સમ્યક્ત્વાભિમુખ જે ભવ્યજીવ ૩, ભવ્ય પ્રાણીનઈ હોઇ। અનઇ કરવુ કરાવવુ દૂરભવ્ય અનઇ અભવ્યનઈ પણિ હોઈ ॥૬૦॥

વૃત્તિનો અર્થ — કરવુ કરાવવુ અનુમોદવુ એ ત્રણમા પણ અનુમોદના જ શ્રેષ્ઠ છે શાથી ? એ વિશેષણ દ્વારા હેતુ કહે છે - જે માટે તે અનુમોદના કેવી ? ધર્મનુ મૂલ-આદિકારણ છે. તેમા

मेवकारो गम्यो, भव्यानामेव । भव्या अपि प्रत्यासन्नमुक्तयः सम्यग्दृष्टयः सम्यक्त्वाभिमुखा वा प्राणाः । तेषामेव मुक्तिनिमित्त जैनधर्मोपादित्सायाः सम्भवात् धर्मविषयरुचित्तोत्साहस्योपादित्सापूर्वकत्वात् । तेषा चोत्कर्षतोऽप्यपार्द्धपुद्गलपरावर्त्तावशेषः ससारो भवति । अन्यत्-करणकारापणलक्षण द्वितीयमन्येषामपि-दूरभव्यानामभव्याना चापि भवेत् । कथमन्यथा तेषा ग्रैवेयकेष्वप्यनन्तश उपपातसम्भव ? इति । यद्यप्यनन्तससारिणामपि दूरभव्यत्वमुच्यते, पर इहापार्द्धपुद्गलाधिकससारी ग्राह्य इति व्यक्त्या धर्मोपादान दर्शितम् । इति गाथार्थः ॥ ६० ॥

अथानुमोदनाऽपि प्रशस्ताप्रशस्तभेदेन द्विधा स्यात्, तस्याश्च स्वरूप विभणिषुः प्रथम सामान्यतस्तद्विषयमाह—

॥जं किंचि वत्थुजायं, सामिमयपसाहगंति मइविसओ । तं च्चिअ णुमोअणिज्जं, पसंसणिज्जं तु इअरंपि॥

व्याख्या—यत्किञ्चिद् वस्तुजात स्वरूपतः स्वामिमतस्य-सुखादेः प्रसाधकम् इति-अमुना प्रकारेण या मति-र्बुद्धिस्तस्या विषयो-गोचरः आरम्भपरिग्रहादिक तप सयमादिक वा, 'त च्चिअ' त्ति तदेवानुमोदनीयम्-अनुमोदनाविषयो भवति । नान्यत् परेषामिष्टसाधनमात्मनश्चानिष्टसाधनमपि, निज-

---

પણ વિશેષણદ્વારા હેતુ કહે છે-જે માટે તે અનુમોદના હર્ષમૂલાકા-હર્ષ-ચિત્તનો ઉત્સાહ છે મૂલ જેણીનુ એવી છે ચિત્તના ઉત્સાહ વિના અનુમોદના થતી નથી આ કારણથી તે અનુમોદના નક્કી ભવ્યોને જ હોય છે. ભવ્યો પણ જેની મુક્તિ નજીકમા છે એવા સમકિતી અથવા સમકિતની સન્મુખ હોય એવા લેવા. કારણ-તેઓનેજ મુક્તિનિમિત્ત જૈનધર્મની ઉપાદિત્સા-ગ્રહણેચ્છા સભવે છે. ધર્મવિષય ચિત્તનો ઉત્સાહ ઉપાદિત્સાથી થાય છે તેઓને વધારેમા વધારે કંઇક ન્યૂન અર્ધપુદ્ગલપરાવર્ત્ત શેષ સસાર હોય છે અન્ય-બીજુ કરવુ કરાવવુ રૂપ ધર્મ અન્યોને-દૂરભવ્ય અને અભવ્યોને પણ હોય છે એમ ન હોય તો તેઓને-અભવ્યોને ગ્રૈવેયકમા પણ અનતવાર ઉપજવુ કેમ સભવે ? । જો કે અનતસસારી જીવોને દૂરભવ્યપણુ કહેવાય છે. પરતુ અહિં કંઇક ન્યૂનઅર્ધપુદ્ગલપરાવર્તથી અધિક સસારી લેવો એથી સ્પષ્ટ રૂપે ધર્મનુ ઉપાદાન બતાવ્યુ ॥૬૦॥

હવે અનુમોદના પણ પ્રશસ્ત અને અપ્રશસ્ત ભેદથી બે પ્રકારે છે. તેનું સ્વરૂપ કહેવાની ઇચ્છાવાળા ગ્રથકાર પ્રથમ સામાન્યથી તેનો વિષય કહે છે—

મૂલનો અર્થ—તે અનુમોદના પ્રશસ્ત અનઈ અપ્રશસ્તભેદઇ બઈ પ્રકારે કહઈ છઈ. જે કાંઇ વસ્તુનો સમૂહ પોતાનઇ વાહલા જયે સુખાદિક તેહનો સાધનાર અમુક એહવી બુદ્ધિનો વિષયછ જે આરભપરિગ્રહાદિક અનઈ તપઃસયમાદિક તે અનુમોદવા યોગ્ય હોઈ અનઈ પ્રશસવા યોગ્ય પોતાનઈ અભિમતના સાધનથિકો બિજુ હોઈ અનુઈ અનુમોદવા યોગ્ય હોઈ તે પ્રશસવા યોગ્ય હોઈ પણિ પ્રશસવા યોગ્ય હોઇ તે અનુમોદવા યોગ્ય ન હોઇ ॥ ૬૧ ॥

વૃત્તિનો અર્થ—જે કંઇ વસ્તુ આરભ-પરિગ્રહાદિ અથવા તપસંયમાદિ સ્વરૂપથી પોતાને ઇષ્ટ સુખાદિ તેને સાધનાર છે એવા પ્રકારે મતિ-બુદ્ધિનો વિષય બને તેજ અનુમોદનીય-અનુમોદનાનો વિષય થાય છે. બીજુ નહિ-બીજાને ઇષ્ટનુ સાધન તેમજ પોતાને અનિષ્ટનુ સાધનપણ, જો એ અનુમોદનીય હોય તો

धनापहारस्याप्यनुमोदनीयत्वापत्ते'। अथ प्रसङ्गतोऽनुमोदनीयव्यापकभूतस्य प्रशंसनीयस्य स्वरूपमाह— 'पसंसणिज्जं तु' त्ति प्रशसनीयं तु इतरदपि—स्वरूपतः स्वामिमतप्रसाधकादतिरिक्तमपि स्यात्। अपि-शब्दात् यदनुमोदनीयं तत् प्रशंसनीय तु भवत्येवेति सूचितमिति गाथार्थः ॥ ६१ ॥

अथ सूचीकटाहन्यायेन प्रथमं प्रशसायाः स्वरूपमाह—

॥ णिअकज्जाइणिमित्तं संतासंतगुणदोसदीवणयं। परसक्खिअं पसंसा इट्ठमणिट्ठं च तव्विसओ ॥६२॥

व्याख्या—निजम्—आत्मीयं कार्यं—चिन्तितप्रयोजन तदादौ यस्य तन्निमित्तं—तदर्थं, सदसद्-गुणदोपदीपनकं—सन्तश्चासन्तश्च सदसन्तः, गुणाश्च दोषाश्च गुणदोपाः, सदसन्तश्च ते गुणदोपाश्चेति विग्रहः, तेषां ·दीपनम्—उद्भासन तदेव दीपनक, परसाक्षिकम्—आत्मव्यतिरिक्तजनसाक्षिक साक्षात् परम्परया वा समीहितकार्यकर्त्तुर्यथाऽवगमो भवति तथेत्यर्थ'। तदवगमनमन्तरेण समीहितकार्यासिद्धेः। तत्र गुणदीपनकं तावत्—भवन्तो महानुभावाः परेपा निग्रहानुग्रहकरणसमर्था इत्यादिवचोभिः। तथा दोषोद्भासनं तत्प्रतिपक्षभूतस्यावसातव्यम्। तस्य दोपोद्भासनेन प्रशसनीयस्य प्रशंसा भवति, तस्य हर्पहेतुत्वेनोभयत्र साम्यात्। अत एव—

'यस्त्वय्यपि दधौ दृष्टि—मुल्मुकाकारधारिणीम्। तमाशुशुक्षणि' साक्षादालप्यालमिदं हि वा'॥

इति श्रीवीतरागस्तोत्रे ( प्र० १५ श्लो० ४ ) क्वचिद् भक्तस्याऽपि दोपोद्भावनेन प्रशसनीयस्य प्रशंसा भवति। यथा—ये त्वा स्तुवन्ति परदूषणघोपणाभि—स्ते जाड्यकश्मलधियः परमार्थवन्ध्याः। एपोऽपि

---

પોતાના ધનને। અપહાર પણ અનુમોદનીય પ્રાપ્ત થશે હવે પ્રસંગથી અનુમોદનીયનુ વ્યાપકરૂપ પ્રશંસનીયનું સ્વરૂપ કહે છે—પ્રશંસનીય તે। ઇતરપણ—સ્વરૂપથી પોતાને ઇષ્ટ સાધનથી બીજુ પણ હોય. અપિ શબ્દથી જે અનુમોદનીય તે પ્રશંસનીય તો હોય છે જ, એ સૂચવ્યુ આ પ્રમાણે ગાથાર્થ ॥ ૬૧ ॥

હવે સૂચીકટાહ—ન્યાયથી પ્રથમ પ્રશંસાનુ સ્વરૂપ કહે છે—

મૂલનો અર્થ—પોતના કાર્ય કરવાનઈ કારણઇ છતા અનઇ અણછતા ગુણ અનઈ દોષ તેહનુ **દીવણયં** દીપાવવુ'-પ્રગટ કરવુ. પરની સાખિ તે પ્રશંસા કહીઈ તુહમો મહાનુભાવ પરકાર્ય કરવાનઇ સમર્થ. સમ્યગ્દૃષ્ટિનુ ધર્માનુષ્ઠાનમાત્ર જિનની આજ્ઞાસહિત તે વલ્લભ, અનઈ બીજુ જિનાજ્ઞારહિત નામથિકો ધર્માનુષ્ઠાન તે અનિષ્ટ તે પ્રશંસાનો વિષય ॥ ૬૨ ॥

વૃત્તિનો અર્થ—નિજ—પોતાનુ' કાર્ય—ચિંતવેલુ પ્રયોજન તે વિગેરે તે નિમિત્ત—તે માટે છતા અને અછતા જે ગુણ-દોષો તેઓનુ દીપન—પ્રકાશન પરસાક્ષિક—પોતાથી અન્યજનની સાક્ષિએ સાક્ષાત્ અથવા પરંપરા ઇષ્ટકાર્ય કરનારને જે પ્રકારે બોધ થાય તે પ્રકારે કારણ તે જ્ઞાન વગર ઇચ્છિતકાર્યની સિદ્ધિ નથી તેમા ગુણદીપન—આપ મહાનુભાવો બીજાઓને નિગ્રહ—અનુગ્રહ કરવામા સમર્થ છો ઇત્યાદિ વચનો વડે. તથા દોષોદ્ભાસના-તેના વિરોધિનુ સમજવુ. તેના દોપ પ્રગટ કરવાથી પ્રશંસનીયની પ્રશંસા થાય છે કારણ તેને આનંદનો હેતુ હોવાથી. બને સ્થાને સરખાપણુ છે. આથી જ—' જે આપના ઉપર ઉલ્મુક-બળતુ લાકડુ તેના આકારને ધારણ કરનારી એવી દૃષ્ટિ-આખને ધારણ કરે છે તેને અગ્નિ ( બાળો એવુ બોલવા જતા ) અથવા એ સાક્ષાત્ બોલવાથી સર્યું ' આ પ્રમાણે વીતરાગ સ્તોત્રમા છે.

सम्बन्धि न सम्भवति, अशुभानामपि प्रवादानां प्रवृत्तेः जिनवचनमूलकत्वप्रसक्त्या शुभानामिवोपादेयता स्यात् । ते च प्रवादाः शुभाशुभरूपा अपि सङ्ख्यया वचनसङ्ख्याकाः ।

यदाह भाष्यकृत्–'जावइआ वयणपहा तावइया चेव हुंति नयवाया । जावइआ णयवाया वयणपहा तत्तिआ चेव' ॥ १ ॥ त्ति । बृहत्कल्पभाष्ये । तेषां च प्रवृत्तिरनादिप्रवाहपतिता कथं जिनवचनमूलिका सम्भवति ?, प्रत्यक्षबाधात् । किञ्च–तेषां सर्वेषामप्यवज्ञाकरणेन जिनावज्ञाभ्युपगमे यदाऽऽसमञ्जस्यं तज्जिनवचनानभिज्ञस्यैव युक्तम् । 'जीवो हन्तव्य' इत्यादि नयप्रवादानामप्यवज्ञाकरणे तथात्वापत्तेः । तस्मादयं भावः–द्वादशाङ्गं हि सर्वोत्कृष्टं श्रुतज्ञानं केवलज्ञानदिवाकरस्य प्रकाशभूतं केवलज्ञानमिव प्रत्यात्मसत्तावर्ति छद्मस्थानां केवलज्ञानसहचरितमेव भवति । तच्चाधिकरणभेदेन भिन्नमपि स्वरूपतो न भिन्नं किन्तु केवलज्ञानमिवैकमेव, तुल्यविषयकत्वात् तुल्यसम्बन्धित्वाच्च । उदयमधिकृत्य तु स्वरूपतोऽपि भिन्नमेव, तत्कारणस्य क्षयोपशमस्य प्रत्यात्मभिन्नत्वात् श्रुतज्ञानस्य च क्षायोपशमिकत्वात् । ते च प्रवादा निजनिजद्वादशाङ्गमूलका अपि सामान्यतो द्वादशाङ्गमूलका एवोच्यन्ते । यथा नानाजलसम्भूतान्यपि नानाकमलानि सामान्यतो जलजान्येव इत्युच्यमाने बाधकाभावात् । अत एव सर्वप्रवादानां मूलं द्वादशाङ्गमेवेति सामान्यतोऽभिहितम् । सर्वस्याऽपि द्वादशाङ्गस्य सर्वोत्कृष्टश्रुतत्वेन सर्वाक्षरसन्निपातात्मकत्वात् प्रवादा अप्यक्षरात्मका एव । अत एव द्वादशाङ्गं रत्नाकरतुल्यं, रत्नाकरस्येव तस्याप्यनेकजातीयशुभाशुभनयलक्षणवस्तूनामाश्रयत्वात् । परं मिथ्यादृशां यद् द्वादशाङ्गं तत् स्वरूपत एव सर्वनयात्मकं सत्तामात्रवर्तित्वात्, न पुनः फलतोऽपि, कस्याऽपि मिथ्यादृशः कदाचिदपि सर्वांशक्षयोपशमाभावात्, मिथ्यादृष्टिमात्रस्योत्कृष्टतोऽपि क्षयोपशमः सर्वांशक्षयोपशमलक्षणसमुद्रापेक्षया बिन्दुकल्पो भवति ।

---

ते वती. ए परमार्थ–द्वादशाग ते सर्वोत्कृष्ट श्रुतज्ञान केवलज्ञानरूपसूर्यनु प्रकाशभूत केवलज्ञाननी परे प्रत्येके आत्मवृत्ति छद्मस्थने केवलज्ञानसघाते ज हुई ते श्रुतज्ञान ते आश्रयभेदे भिन्नपणे स्वरूपथी भिन्न नही तउ स्यु ? केवलज्ञाननी परे एक ज सरिखा विषयपणाथी, अने तुल्य सबधपणाथी उदयआश्रयी तो स्वरूपथी पणि भिन्न ज. तेहनु कारण जे क्षयोपशम तेहने आत्मा आत्माप्रते भिन्नपणाथी, श्रुतज्ञानना उदयने क्षयोपशमथी उपनापणाथी अने ते प्रवाद ते आपआपणी द्वादशागीथी उपनापणि सामान्यथी द्वादशागमूलक ज कहीइं. जिम भिन्न भिन्न जलथी उपना पणि जूजूआ कमल ते सामान्यथी जलथी ज उपना इम कहेते बाधकना अभावथी, एतलाज वती सर्व प्रवादनु मूल द्वादशाग ज एहवु सामान्यथी कहिउ. सर्वई द्वादशागने सर्वोत्कृष्टश्रुतपणे सर्वाक्षरसन्निपातरूपपणाथी प्रवादपणि अक्षर रूप ज

एतलाज वती द्वादशाग ते रत्नाकरसदश–रत्नाकरनी परे अनेक जाति सबधि शुभाशुभ जे नय ते रूप वस्तुना आश्रयपणाथी, पणि मिथ्यादृष्टिनु जे द्वादशाग ते स्वरूपथी ज सर्वनयरूप सत्तामात्रवर्त्तिपणाथी, पणि फलथी नहीं, कोइए मिथ्यात्वीने किवारे पणि सर्वांशे क्षयोपशमना अभावथी मिथ्यादृष्टिमात्रने उत्कृष्ट थकी पणि क्षयोपशम ते सर्वांशे क्षयोपशमरूप समुद्रनी अपेक्षाई बिंदुकल्प हुई 'जित्यो राग जेणे, केवलआलोके मनोहर, इंद्रे करी छे सेवा जेहनी एहवो श्रीमहावीर देव ते सर्वोत्कर्षे वर्त्ते छे. जे अनुपम जे सिद्धातसमुद्र चारु गभीरपणानो भजनार एहवा, तेहनी आगलीं समस्तनयना समूह ते बिंदु भावने भजे ' सम्यग्दृष्टिने तो कुणेके सयतने फलथी पणि द्वादशागने सर्वनयस्वरूपपणुं

यदुक्तम्—'जयति विजितरागः केवलालोकशाली, सुरपतिकृतसेवः श्रीमहावीरदेव'। यदसमसमयाब्धेश्चारुगाम्भीर्यभाजः, सकलनयसमूहा विन्दुभाव भजन्ते ॥ १ ॥ इति । सम्यग्दृशा तु केषाञ्चित्संयतानां फलतोऽपि द्वादशाङ्गस्य सर्वनयात्मकत्व, सर्वांशक्षयोपशमस्य सम्भवात् । अत एव गौतमादयः सर्वाक्षरसन्निपातिनः प्रवचने भणिताः । पर तेषां संयताना सकलमपि द्वादशाङ्ग शुभनयात्मकत्वेनैव परिणमति, सावद्यनयविषयकानुज्ञादिवचनप्रवृत्तेरप्यभावात् सयतमात्रस्य च तथात्वात् । एतेन सर्वेऽपि शाक्यादिप्रवादाः जैनागमसमुद्रसम्बन्धिनो विन्दव इति भ्रान्तिरपि निरस्ता, 'षट्शतानि नियुज्यन्ते पशुना मध्यमेऽहनी' त्यादिप्रवादानामपि जैनागममूलकत्वापत्त्या सयतानां सावद्यभाषाप्रवृत्तिप्रसक्त्याऽसंयतत्व स्यात् । तस्मात्सर्वांशक्षयोपशमसमुत्थद्वादशाङ्गलक्षणसमुद्रस्य पुरस्तादन्यतीर्थिकाभिमतप्रवादाः समुदिता अपि बिन्दूपमा. ( इत्यर्थो युक्तः ) । अन्यथा 'विन्दुभाव भजन्ते' इति प्रयोगानुपपत्तिः स्यात्, अवयवावयविनोरुपमानोपमेयभावेन वर्णने निजावयवापेक्षया महत्त्वेऽप्यवयविनो गौरवाभावात् स्तुतिवचनासम्भवात् । नह्यङ्गुष्ठो हस्तावयवभाव भजते इति हस्तस्य स्तुति सम्भवतीति तात्पर्यम् ।

किञ्च-समुद्रस्य विन्दव इति भणनमप्यसङ्गतम् । समुद्रप्रभवा हि वेलाकल्लोलोर्म्यादयो भवन्ति न पुनः विन्दवः, तेषां चोत्पत्तिर्मेघात् हस्तवस्त्रादिव्यापाराद्वा स्यादिति सर्वानुभवसिद्धम् । अन्यथा समुद्रान्निर्गतैस्तावद्भिर्बिन्दुभिः समुद्रस्य न्यूनत्वापत्त्यो तस्य गाम्भीर्यस्य हानिः स्यादिति सम्यक्पर्यालोच्यमिति । सामान्यतः पराशङ्कामपास्य अथ वृत्तिगतव्याख्यानसङ्गतिमोह-यस्मात् कारणात् द्वादशाङ्ग रत्नाकरोपमया शुभाशुभसर्वप्रवादाना मूल तस्मात् स्वरूपतः फलतश्च यावत् सुन्दरमात्मनिष्ठाकरणनियमादिवाच्यवाचक वाक्यादिकं 'तम्मि'त्ति । तस्मिन् द्वादशाङ्गे, एवकारो गम्यः, द्वादशाङ्ग एव समवतारणीय तत्र वर्तते एवेत्यर्थः । द्वादशाङ्गस्य सर्वोत्कृष्टश्रुतत्वेन तद्व्यापकभूतस्य सर्वसुन्दरात्मकत्वस्यावश्यंभावात्

---

સર્વાંશે ક્ષયોપશમેના સંભવથી. એતલા જ વતી ગૌતમાદિક તે સર્વાક્ષરના સંન્નિપાતી પ્રવચનને વિષઇ કહ્યા છે. પણિ તે સંયતને દ્વાદશાંગ તે શુભનયસ્વરૂપ પણિ જ પરિણમે. સાવદ્યનયવિષયક જે આજ્ઞા તદ્રૂપવચનપ્રવૃત્તિના પણિ અભાવથી 'સંયતમાત્રને' તથાપણાથી એતલે સર્વઇ શાક્યાદિકના પ્રવાદ તે જૈનાગમરૂપસમુદ્રસંબંધી બિંદુઆ છે. એહવી ભ્રાંતિ પણિ ટાલી

'છસે જોડીઈ પશૂના મધ્યમ યાગે' ઇત્યાદિ પ્રવાદને પણિ જૈનાગમમૂલકપણાની આપત્તિથી સંયતને સાવદ્યભાષાની પ્રવૃત્તિને પ્રસંગે અસંયતપણું થાઇ તે વતી સર્વાંશે ક્ષયોપશમથી ઉપનો જે દ્વાદશાંગ લક્ષણ-સમુદ્ર. તહેની આગલિ અન્યતીર્થિક સંબંધી મિલ્યા પણિ બિંદૂપમા ઇમ નહી તો બિંદુ ભાવ ભજે એ પ્રયોગની અયુક્તતા થાઇ. અવયવ જે એક દેશ અને અવયવી જે અંગી તેહેને ઉપમાનોપમેયભાવે સરિખાઇ પણિ વર્ણવતઇ પોતાના અવયવીની અપેક્ષાઇ મોટાઈપણુ છતે પણિ અવયવીને શુદ્ધપણાના અભાવથી, અંગુષ્ઠ તે હસ્તનો અવયવભાવ ભજે તે વતી હસ્તની સ્તુતિ તો ન સંભવે. એ તાત્પર્ય વલી સમુદ્રના બિંદુ એ કહિવુ પણિ અયુક્ત. સમુદ્રથી ઉપના વેલા કલ્લોલ ઉર્મિ ઇત્યાદિક હુઈ, બિંદુઆ નહિં. તેહોના તો ઉત્પત્તિ મેઘથી અથવા હસ્તવસ્ત્રાદિકના વ્યાપારથી હુઈ. એ સર્વને અનુભવસિદ્ધ છે ઇમ નહીં તો સમુદ્ર નીકલ્યા જે બિંદુ તેણિં સમુદ્રને ન્યૂનપણાની પ્રાપ્તિ તે સમુદ્રને ગંભીરપણાની હાની થાયે. એ વીચારવુ. ઇમ સામાન્યથી પરની આશંકા ટાલીને હિવે વૃત્તિના વ્યાખ્યાનની સંગતિ કહે છે.

परं सम्यग्दृशां यावत्सुन्दरं तावत्सर्वमपि द्वादशाङ्गमूलकमुदितं भवति, फलतोऽपि शुभत्वात् । तत एव तस्याराधनविधेरपि सम्यग् परिज्ञानात्, तच्च सानुबन्धिपुण्यप्रकृतिबन्धहेतुरेव । मिथ्यादृशां तु यतः क्वचिदंशे शुभत्वेऽपि फलतोऽशुभत्वमेव, तदाराधनविधेरपरिज्ञानात्, तदपि तदंशे क्षयोपशम(मा)भावात् निरनुबन्धिपुण्यप्रकृतिबन्धहेतुत्वात् ।

अयं भावः—अकरणनियमो हि स्वरूपत. सुगतिहेतुत्वेन शुभोऽपि सम्यग्दृशां संयमहेतुत्वेन फलतोऽपि शुभ एव, पुण्यानुबन्धिपुण्यप्रकृतिजनकत्वेन सुगतिहेतुत्वात् । मिथ्यादृशां तु स एवा नियमो मिथ्यात्वोपहतो जीवादिवस्तुतत्त्वपरिज्ञानाभावात् असयमहेतुत्वेन फलतोऽशुभ एव, दुर्गतिहेतुत्वात् । (द्रव्यतोऽकरणनियमस्य तथात्वात्) मिथ्यात्वोपहतोऽकरणनियमोऽप्याश्रवसम एवं । यथा मरणहेतुविषवद्विषमिश्रितपायसमपीति । एव सम्यग्दृग्मिथ्यादृशोरकरणनियमयोः शुभाशुभफलजनकत्वेनोदितानुदितयोर्विरुद्धस्वरूपपरिणतयोरभेदेन भणनमुदितस्याकरणनियमस्यावज्ञया जिनाज्ञावज्ञाऽविनाभूता जिनावज्ञा स्यात् । स चानन्तससारहेतुरिति भणितम् । यथा मोक्षाङ्गं स्वरूपतः शुभमपि मनुष्यत्व संयतजनस्य फलतोऽपि शुभमेव, मोक्षप्राप्तिपर्यन्तं सुगतिहेतुत्वात् । तदेव मनुष्यत्व व्याधादेः फलतोऽशुभमेव, जीवघाताद्यसंयमहेतुत्वेन दुर्गतिहेतुत्वात् । एव सत्यपि भेदे द्वयोरपि मनुष्यत्वयोस्तुल्यतया भणनं सयतजनमनुष्यत्वस्यावज्ञया जिनावज्ञैव, जिनेनैव भेदेनाभिधानात् । दृश्यते च लोकेऽपि लक्षणोपेतल . पेतयोर्मण्योस्तुल्यतया भणने लक्षणोपेतमणेरवज्ञया तत्परीक्षकस्याप्यवज्ञैव, तदुक्त (-विधि) विरुद्धवक्तृत्वादित्यादिदृष्टान्तैः सम्यक्पर्यालोचनया न किञ्चिद् बाधकम् । अन्यथाऽऽसतामुपदेशपदवाक्यानि, जैनप्रवचनमात्रेणाऽपि सह विरोधः स्यात् ।

---

जे कारणथी द्वादशांग ते रत्नाकरनी उपमाई शुभाशुभ सर्वप्रवादनुं मूल छे, ते कारणथी स्वरूपथी अने फलथी जेतलुं सुंदर आत्माने विषे अकरणनियमादिक रूप जे वाच्य तेहनुं वाचक जे वाक्यादि ते द्वादशांगने विषे एवकार ते आहिरथी लेवो. एतले द्वादशांगने विषे ज अवतार्युं. तिहां ते छेज ए अर्थ. द्वादशांगने सर्वोत्कृष्टश्रुतपणे करीने तेहनुं व्यापकभूत-जे ते, हुं तिहां हुईज एहवुं, सर्वसुंदरपणुं तेहने अवश्ये छतापणाथी. पणि सम्यग्दृष्टिने जेतलुं ए सुंदर तेटलुं सर्वंपणि द्वादशांगमूलक उदित हुइ फलथी ए शुभपणाथी तेथी ज तेहना आराधनविधिनो पणि सम्यक्परिज्ञानथी. ते तो अनुबंध सहित पुण्यप्रकृतिबंधनुं हेतु ज. मिथ्यादृष्टिने तो स्वरूपथी कोई अंशे शुभपणुं छते पणि फलथी अशुभपणुंज. तेहना आराधनविधिना अज्ञानथी ते पणि ते अंशने विषई क्षयोपशमना अभावथी अनुबंध ते आगलि पुण्यनुं प्रवर्त्तवुं तेणे रहित पुण्यप्रकृतिबंधहेतुपणाथी. ए भाव-अकरणनियम ते स्वभावथी सुगतिहेतुपणिं करी शुभ पणि मिथ्यादृष्टिने तो तेहज अकरणनियम मिथ्यात्वे उपहत, जीवादिक जे वस्तुतत्त्वना परिज्ञानना अभावथी असंयमहेतुपणि करी फलथी अशुभज दुर्गतिहेतुपणाथी. मिथ्यात्वे उपहत अकरणनियमे मिथ्यात्वसम ज. जिम मरणहेतु जे विष तेहनी परे विषयुक्त क्षीरपणिं

एम सम्यग्दृष्टि अने मिथ्यादृष्टिना अकरणनियम तेहने प्रत्येके शुभ अने अशुभ जे फल तेहने जनकपणि उदित अने अनुदित जे विरुद्धस्वरूपिं परिणम्या तेहनुं अभेदे कहिवुं ते उदित अकरणना नियमनी अवज्ञाई जिनाज्ञानी अवज्ञाने अणुकरते अणुहुति एहवी जिनावज्ञा हुई. ते तो अनंतसंसारनो हेतु एहवुं कहिउं. जिम मोक्षनुं कारण स्वरूपथी शुभ पणि मनुष्यपणुं संयतजनने

यत' सम्यक्त्वोच्चारेऽपि–'णो कप्पइ अण्णउत्थिए वा अण्णउत्थियदेवयाणि वा अण्णउत्थि-अपरिग्गहिआणि अरिहतचेइआणि वे'त्यादिभणनेन मिथ्यादृशा महावज्ञा स्यात्, तत्परिगृहीताऽर्हच्चैत्यानामपि परित्यागस्य भणितत्वात्। तदवज्ञया च जिनावज्ञाप्रसक्तौ 'लाभमिच्छतो मूलक्षितिरायाते'ति न्यायप्रसक्ते। किञ्च–'शाक्यादयो दिगम्बरादयश्च मिथ्यादृष्टय' इति वचनमपि वक्तुमयुक्तम्, भवदभिप्रायेण तस्य जिनावज्ञाहेतुत्वात्। तथा 'कुप्पवयण पासडी सव्वे उम्मग्गपट्ठिआ। सम्मग्ग तु जिणक्खाय एस मग्गे हि उत्तमे'॥ १॥ त्ति। श्रीउत्तरा० (अ. २३ गा० ६३) अत्र हि शाक्यादिमार्गाणामुन्मार्गतया भणनेन जैनमार्गस्य मोक्षमार्गतया भणनेन चान्यतीर्थिकाना महावज्ञा। तथा–'वेआ अहीआ ण भवंति ताण, भुत्ता दिआ णिंति तमतमेण' (उत्तरा० अ० १४, गा० १२) इत्यादिवचनैरन्यतीर्थिकाना गुरोरागमस्य चावज्ञा प्रतीतैव। तत्राऽपि वेदाः शब्दात्मकत्वेन द्वादशाङ्गस्यावयवभूता आबालगोपाङ्गनानामपि प्रतीता एव। तदवज्ञया च द्वादशाङ्गावज्ञा जिनावज्ञाहेतुरेव। तथा 'बुद्धस्स आणाइ इम समाहि'मित्यादि तथा 'अदक्खुव दक्खुवाहिअ'मित्यादि प्रागुपदर्शितागमवचनैर्विरोधः स्फुट एव।

किञ्च–मिथ्यादृष्ट्यवज्ञया जिनावज्ञाभणन दूरे, प्रत्युत ज्ञानदर्शनचारित्राणि स्थिराणि भवन्तीति ज्ञापकवचनानि तत्प्रशसाया च सम्यक्त्वातिचारप्रतिपादकवाक्यानि च सम्यग् पर्यालोच्यानि। ननु भो! नहि वय तन्मार्गावज्ञया जिनावज्ञा ब्रूमः; किन्तु तदीयमार्गे यत्किमपि शोभन कृत्य तदवज्ञया जिनावज्ञेति

---

ફલથી પણિ શુભજ, મોક્ષની પ્રાપ્તિપર્યંત સંગતિહેતુપણાથી તેહજ મનુષ્યપણું વ્યાધાદિકને ફલથી અશુભ જ જીવઘાતાદિક જે અસયમ તેહને હેતુપણિ કરી દુર્ગતિના હેતુપણાથી. ઇમ છને ભેદે પણિ ભિક્ષુ મનુષ્યપણાને સરીખાઇઈ કહિવું, તે સંયતજનના મનુષ્યપણાની અવજ્ઞાઇ જિનની અવજ્ઞાજ. જિને જ ભેદ કહ્યાથી. દેખાઈ છે લોકને વિષે પણિ લક્ષણે યુક્ત અને લક્ષણે રહિત જે મણિ તે બિહુને સદૃશપણું કહે તે લક્ષણે યુક્ત મણિની અવજ્ઞાઈ તેહના પરીક્ષકની અવજ્ઞાજ. તેહના કહ્યાથી વિરુદ્ધકથકપણાથી. ઇત્યાદિ દૃષ્ટાંતે સમ્યગ્ વિચારણાઇ ન કોઈ બાધક.

ઇમ નહી તો ઉપદેશપદના વાક્યનો રહો, જૈનપ્રવચનમાત્ર સાથિ વિરોધ થાય. અન્યતીર્થીના દેવ અથવા અન્યતીર્થીઈ ગ્રહ્યા અરિહંતના ચૈત્ય ઇત્યાદિક કહેવે કરીને મિથ્યાત્વીની મહા અવજ્ઞા થાઇ. તેણે પરિગૃહીત અર્હચ્ચૈત્યને પણિ પરિત્યાગના કહેવાપણાથી અને તેહની અવજ્ઞાઈ જિનની અવજ્ઞાની પ્રસક્તિ હુઈ તો 'લાભ વાછતા મૂલે ક્ષતિ આવી' એ ન્યાયની પ્રસક્તિથી.

વલી શાક્યાદિક અને દિગબરાદિક મિથ્યાદૃષ્ટિ એ વચન પણિ કહેવાનઈ અયુક્ત તાહરે અભિપ્રાયે, તેહને જિનાવજ્ઞાના હેતુપણાથી વલી 'કુપ્રાવચનિકે પાખડી સર્વે ઉન્માર્ગે ચાલ્યા છે સન્માર્ગ તે જિનનો પ્રકાસ્યો એ માર્ગ તે ઉત્તમ.' ઇહા શાક્યાદિમાર્ગને ઉન્માર્ગપણે ભણવે અને જૈનમાર્ગ પણિ કહેવે અન્યતીર્થિકની મહાવજ્ઞા. વલી 'વેદ ભણ્યા ત્રાણ ન હુઈ દ્વિજ જમ્યા તમતમાઇ પછવાડે' ઇત્યાદિકવચને અન્યતીર્થિકના ગુરુની આગમની અવજ્ઞા પ્રસિદ્ધ જ. તિહા પણિ વેદ તે શબ્દાત્મકપણે દ્વાદશાગના અવયવભૂત બાલગોપાલની અગનાને પ્રસિદ્ધ જ, એહની અવજ્ઞાઈ દ્વાદશાગની અવજ્ઞા તે જિનાવજ્ઞાનો હેતુ જ. તથા 'સ આણાઇ' તથા 'अदक्खुव दक्खु' ઇત્યાદિ જે પૂર્વે દેખાડ્યા જે આગમવચન તેણે વિરોધ સ્ફુટ જ. વલી મિથ્યાદૃષ્ટિનો અવજ્ઞાઈ જિનાવજ્ઞાનું કહેવુ તો દૂર, સાહમુ જ્ઞાનદર્શનચારિત્ર સ્થિર હુઈ એહવા જે જ્ઞાપકવચન અને તેહની પ્રશસાઇ સમકિતમા અતિચારના પ્રતિપાદક વાક્ય તે સમ્યક્ વિચારવા.

चेत् । सत्यम्, तत्र शोभन कृत्य किं सम्यक्त्वप्राप्तिहेतुः साधुदानादिकम् ? उत तत्तन्मार्गाभिमतदेवगुरुधर्माराधनं वा ? आद्ये, इष्टापत्तिरेव, सम्यक्त्वाभिमुखस्यैव तथाकर्त्तव्यस्य सम्भवात् । द्वितीये, जैनाना तदीयदेवाद्याराधनस्यैव मिथ्यात्वेनाभ्युपगमात् कथं शोभनत्वं ? प्रत्युत महापापरूपमेव । कथमन्यथा सम्यक्त्वोच्चारे तदीयदेवाद्याराधनस्य प्रत्याख्यानसम्भवः ? ।

किञ्च—आस्तामन्यत्, मिथ्यात्वे सति अकरणनियमोऽपि पापे निवृत्तिरूपो न भवति, किन्तु प्रवृत्तिरूपः, तस्य चावज्ञया जिनावज्ञा वक्तु भवानेव समर्थो नापर इति तात्पर्यम् । यदि चैव ( ग्रन्थसङ्गतिकरणं सम्यग् न प्रतिभापते तर्हि वय पृच्छामः ) ग्रन्थकर्तुरभिप्रायो नाभविष्यत् तर्हि उन्मत्तस्येव पूर्वापरविरोधापरिज्ञानवतोऽस्यापीद वचन पूर्ववचनवद् भवतोऽनुपादेयं स्यात् । तस्मादिह वयमपि पृच्छामः—विरुद्धयोरुभयोरपि पक्षयोः किमविशेषेण प्रामाण्याभ्युपगमो युक्त उत एकतरस्य वा ? नाद्यः, असम्भवात्, विरुद्धयोर्द्वयोः प्रामाण्यासम्भवात् । द्वितीये, अन्यतरस्य प्रामाण्याभ्युपगमोऽनन्यगत्या प्रवचनसम्मत्यैव जैनानां युक्तः, स च उक्तप्रकारेणैव । अन्यथा श्रीसुधर्मस्वामि-श्रीहरिभद्रसूरिप्रभृतीनामनाभोगोद्भावनेनैव समर्थनं कर्त्तव्यं प्रसज्येत । न पुनर्विरोधे सत्येव निजमतिपुरस्कारेण यथारुचिप्रवर्त्तन युक्त, प्रवचनमर्यादाभङ्गापत्त्या तीर्थकृता महाशातना स्यात् । ( निजरुचेश्च प्रतिपुरुषं भिन्नत्वेन परस्पर कलहानिवृत्तेः ) । यत्तु सर्वप्रवादानां मूलं द्वादशाङ्गं रत्नाकरतुल्यमिति समर्थनाय टीकाकारेण 'उदधाविव सर्वसिन्धवः' इत्यादिरूप श्रीसिद्धसेनदिवाकरवचनं सम्मतितयोद्भावितम्, तच्च विचार्यमाणमसङ्गतमिवाभाति । तथाहि—यदि द्वादशाङ्गं रत्नाकरतुल्यं तर्हि नदीतुल्याः प्रवादा न भवेयुः, समुद्रान्नदीनामुत्पत्तेरभावात् । समुद्रस्य च नदीपितृत्वापत्त्या 'नदीपति समुद्र' इति कविसमयव्याहृतिप्रसक्तेः समुद्रस्य गाम्भीर्यहानिप्रसक्तेश्च । नहि सत्यवकाशे जलं कुतश्चिदपि निर्गच्छति ।

किञ्च—सर्वा अपि नद्यः समुद्रगामिन्य इत्यागमप्रतीतमपि सर्वानुभवसिद्ध केनाऽप्यन्यथा कर्त्तुमशक्यम् । तस्मात् स्तुतिकर्त्तुरभिप्रायस्त्वेवं—हे नाथ ! त्वयि सर्वज्ञे दृष्टयः अन्यतीर्थिकाना निजनिजमार्गश्रद्धानलक्षणाः, समुदीर्णाः—सम्यगुदयं प्राप्ता, तद्विषयो भगवान् सञ्जात इत्यर्थः । अयं भावः—यत्किञ्चिदकरणनियमादिक जिनेन सुन्दरतया भणितं, तदन्यतीर्थिकैरपि तथैव प्रतिपन्नम् । एतच्च साम्प्रतमपि

---

પૂર્વપક્ષ—અહૂરુયો તેહના માર્ગની અવજ્ઞાઇ જિનની અવજ્ઞા ઇમ નથી કહેતા. તઉ સ્યુ ? તેહના માર્ગને વિષે જે કાઇ શોભન કર્તવ્ય તેહની અવજ્ઞાઇ જિનની અવજ્ઞા એહવુ જઉ, સત્ય કહે છે. તિહા શોભન કર્તવ્ય તે સ્યુ ? સમ્યક્ત્વની પ્રાપ્તિનો હેતુ જે સાધુદાનાદિક અથવા તેહના તેહના માર્ગના ઇષ્ટ જે દેવગુરુધર્મના આરાધન ? આદ્યપક્ષે, ઇષ્ટની પ્રાપ્તિ જ. સમ્યક્ત્વને સન્મુખને જ તેહના કર્તવ્યના સંભવથી. બીજે પક્ષે તો, જૈનનઇ તેહવા દેવાદિકના આરાધન તેજ મિથ્યાત્વપણિં અંગીકારથી કિમ શોભન ? સાહમુ મહાપાપ જ ઇમ નહી તો સમ્યક્ત્વોચ્ચારિં તત્સબંધિ દેવાદિકના આરાધનનુ પચ્ચક્ખાણ કિમ સંભવે ? વલી અન્ય તો દૂર, મિથ્યાત્વ છતે અકરણનિયમપણિં પાપને વિષે નિવૃત્તિરૂપ ન હુઇ. તઉ સ્યુ ? પ્રવૃત્તિરૂપ, તેહની અવજ્ઞાઇ તો જિનાવજ્ઞા પ્રતે કહેવાને તુજ સમર્થ, બીજો કો નહીં. એ તાત્પર્ય.

જઉ એહવા ગ્રંથકર્તાનો અભિપ્રાય ન હોત, તઉ ઉન્મત્તની પરે પૂર્વાપરવિરોધના અજ્ઞાનવંત એહવા એહનુ પણિ એ વચન પૂર્વલા વચનની પરે તુઝને અનાદરણીય જ હુઇ. તે માટે અહ્મો પણિ ઇહા પૂછુ છુ—વિરુદ્ધ બિહુ પક્ષનો સ્યું નિર્વિશેષે જ પ્રમાણપણાના અંગીકાર યુક્ત અથવા એકનો ?

नालिकेरादिफलाहारेणैकादशीपर्वोपवास कुर्वाणाः जैनाभिमतोपवास सम्यक्तया मन्यन्ते। जैनाश्च तदीयोपवासं लेशतोऽपि न मन्यन्ते। अत एव 'न च तासु भवान् प्रदृश्यते' इति तासु अन्यतीर्थिकदृष्टिषु भवान्न प्रदृश्यते, अन्यतीर्थिकश्रद्धानविषयीभूत धार्मिकानुष्ठान गङ्गास्नानादिक भवान् लेशतोऽपि न मन्यत इत्यर्थः। मिथ्यादृष्टित्व च तेषा जिनोक्तेषु कचिद्याथार्थ्येन श्रद्धानेऽपि तत्प्रणेतर्यर्हति देवत्वेन श्रद्धानाभावादेव। अत एव देवो रागद्वेषरहितः सर्वज्ञ एव भवति, नापरः। स चास्मदभिमतः सुगतादिरेव, नापरः। एवं जैनाभासोऽपि देवोऽर्हन्नेव परमसन्मार्गप्रणेतेत्यादि। मिथ्यात्वे बीजमग्रे वक्ष्यते। अयं भावः–अर्हतोच्यमानमकरणनियमादिकमन्यतीर्थिकैरपि प्रतिपन्नम्। अतस्तेषा दृष्टयोऽर्हति वर्तन्ते। तदीयदृष्टिषु च भवान् लेशतोऽपि नास्ति, तैरुक्त सर्वमप्ययथार्थमेवेत्यर्हता प्रज्ञप्तत्वात्।

यदागमः–'सम्मद्दिट्ठी उ सुअमि अणुवउत्तो अहेउअ चेव। ज भासइ सा मोसा मिच्छादिट्ठी वि अ तहेव'॥ १॥ इति श्रीदशवैका० नि० (गा० २८०) वृत्तिर्यथा–'सम्यग्दृष्टिरेव सामान्यतः श्रुते–आगमेऽनुपयुक्तः प्रमोदाद् यत्किञ्चिदहेतुक चैत्र-युक्तिविकल चैव यद्भाषते 'तन्तुभ्यः पट एव भवती'त्यादि, सा मृषा, विज्ञानादेरपि तत एव भावादिति। मिथ्यादृष्टिरपि तथैव उपयुक्तोऽनुपयुक्तो वा यद् भाषते सा मृषैव, घुणाक्षरन्यायेन सवादेऽपि सदसतोरविशेषात् यदृच्छोपलब्धेरुन्मत्तवदिति गाथार्थः'। एतेन मिथ्यादृष्टिरपि कचिदंशे जिनोक्त सम्यक् ब्रुवाण 'सत्यवादी भविष्यतीति शङ्काऽपि परास्ता, घुणाक्षरन्यायेनानन्यगत्या सत्याभासवक्तृत्वात्। अत एव रत्नाकरावतारिकायामपि सिद्धसेनदिवाकरवदुक्तम्।

---

આદ્યપક્ષ તો નહીં, અસંભવથી વિરુદ્ધ બિનિ, પ્રમાણપણાના અસંભવથી બીજે પક્ષે, એકને પ્રામાણ્યપણું માનતે બીજી ગતિ વિના પ્રવચનની સંમતિ જ જૈનને યુક્ત. તે તો કહે પ્રકારે જ ઇમ નહીં તો શ્રીસુધર્મસ્વામિ–શ્રીહરિભદ્રસૂરિપ્રમુખને અનાભોગને ઉદ્ભાવને જ સમર્થન કરિવુ થઇ. પણિ વિરોધ છતે નિજમતિને આગલિ કરી યથેચ્છાઇ પ્રવર્તન તે યુક્ત નહી પ્રવચનમર્યાદાભંગની પ્રાપ્તિ તીર્થંકરની મહાશાતના થાઇ નિજરુચિનો તો પુરુષ પુરુષપ્રતે ભિન્નપણે માંહે માંહે કલહની અનિવૃત્તિથી.

અનઇ જે સર્વપ્રવાદનુ મૂલ દ્વાદશાંગ સમુદ્રસરિખુ એ સમર્થવાને ટીકાકારે 'उदधाविव' ઇત્યાદિ જે સિદ્ધસેનદિવાકરનુ વચન સંમતિપણે દેખાડ્યુ. તે તો વિચારીતુ અસંગતિની પરે ભાસઇ છઇ જઉ દ્વાદશાંગ સમુદ્રસરીખુ તઉ નદીસરીખા પ્રવાદ ન હુઇ. સમુદ્રથી નદીની ઉત્પત્તિના અભાવથી સમુદ્રને નદીના પિતાની આપત્તિ 'નદીપતિ સમુદ્ર' એહવી કવીસમયની પ્રવૃત્તિ ટલી જોઇઇ સમુદ્રનૂઇ ગંભીરપણાની હાનીના પ્રસંગથી છતે અવકાશે જલ કિહાંથીએ નીકલે નહી સકી, સર્વનદી તે સમુદ્રગામીનીઓ એહવુ આગમપ્રસિદ્ધ પણિ સર્વને સાક્ષાત્ જ્ઞાનસિદ્ધ કેણે પણિ અન્યથા કરિવાને અશક્ય તે વતી સ્તુતિકર્તાનો અભિપ્રાય તે ઇમ–હે સ્વામિન્! તુ સર્વજ્ઞ તેહને વિષે અન્યતીર્થીની આપઆપણા માર્ગની શ્રદ્ધાનરૂપ જે દૃષ્ટિ તે સમ્યક્ ઉદય પામી, તેહનો વિષય ભગવંત થયો એ અર્થ એ ભાવ–જે કાઇ અકરણનિયમાદિક જિને સુંદરપણિ કહિઉ, તે અન્યતીર્થીઇ પણિ તિમજ પડિવજ્યુ. એ તો સંપ્રતિપણિ નાલિકેરાદિકફલને આહારે એકાદશી પર્વનો ઉપવાસ કરતા તે જૈનના ઇષ્ટ ઉપવાસને સમ્યક્પણિ માનઇ છઇ. અને જૈન તો તેહનો ઉપવાસ લેશથીએ ન માને.

એતલાજ વતી તેહને વિષે તું ન દીસે એ અન્યતીર્થીદૃષ્ટિને વિષઇ તુ ન દેખીઇ, અન્યતીર્થીના શ્રદ્ધાનનુ વિષયીભૂત જે ધાર્મિકાનુષ્ઠાન–ગંગાસ્નાનાદિક તે તું અંશથી એ ન માનઇ, એ અર્થ.

तथाहि–'अर्थस्य प्रमितौ प्रसाधनपटु प्रोचु' प्रमाणं परे, तेषामञ्जनभोजनाद्यपि भवेत् वस्तु प्रमाणं स्फुटम् । आसन्नस्य तु मानता यदि तदा संवेदनस्यैव सा, स्यादित्यन्धभुजङ्गरन्ध्रगमवत्तीर्थ्यैः श्रितं त्वन्मतम्' ॥ इति ( पत्रांक. १२ ) तथा श्रीहेमाचार्यवचोऽपि–'सा वासना सा क्षणसन्ततिश्च, नाभेदभेदानुभयैर्घटेते । ततस्तटादर्शिशकुन्तपोतन्यायात्त्वदुक्तानि परे श्रयन्तु' ॥ इति श्रीमहावीरद्वात्रिंशिकाया ( श्लो० १९ ) अथान्यतीर्थिकाना दृष्टयो भगवति वर्त्तन्ते । तत्र दृष्टान्तमाह–'उदधाविव सर्वसिन्धव' इति । यथोदधौ सर्वसिन्धवः–सर्वा अपि नद्यः, समुदीर्णाः भवन्ति–सम्यगुदयं प्राप्ताः स्युः । लोकेऽपि भर्तृसम्बन्धेन स्त्रिय उदिता भवन्तीति प्रसिद्धिः । एवं नद्योऽपि समुद्रगामिन्योऽवसातव्याः । तासु च भवान्नास्तीत्यत्र दृष्टान्तमाह–यथा प्रविभक्तासु सरित्सु–नदीषु उदधिः–समुद्रो नास्ति, तासु च समुद्रो नावतरतीत्यर्थः । इत्येवमभिप्रायेण स्तुतिः । न पुनरर्हदुपदिष्टप्रवचनद्वारा अर्हत्सकाशादन्यतीर्थिकदृष्टयः समुत्पन्ना, उक्तदृष्टान्तयोरसम्भवादित्येवं सम्यक्पर्यालोच्यमिति गाथार्थः ॥ ७६ ॥

---

મિથ્યાદૃષ્ટિપણુ તો તેહને જિનભાષિતને વિષે કિહાએક યથાર્થપણે શ્રદ્ધાને તેહના કહનાર અરિહંતને વિષે દેવપણિ શ્રદ્ધાના અભાવથી એતલાજ વતી દેવ તે ગગદ્રૂપરહિત સર્વજ્ઞ જ હુઇ. અન્ય નહીં. અને તે અમ્હારો માન્યો સુગતાદિક. બાજો નહી. ઇમ જૈનાભાસપણે દેવ તે અરિહંતજ, પણિ અમ્હારા માર્ગનો અરૂપક ઇત્યાદિક મિથ્યાત્વને વિષે બીજ આગલિ કહીસ્યે'. એ ભાવ–અરિહંતે કહીવું જે અકરણનિયમાદિક તે અન્યતીર્થીઈ પણિ પડિવજ્યુ. એતલા જ વતી તેહની દૃષ્ટિઓ અરિહંતને વિષે. તેહની દૃષ્ટિને વિષે તુ લેશથી નથી. તેહણિ કહિઇ તે સર્વઇ અયથાર્થ એહવુ અરિહંતે પ્રજ્ઞપ્તપણાથી. 'સમ્યગ્દૃષ્ટિ શ્રુતનઈ વિષે અનુપયોગવંત અહેતુક જે બોલે તે મૃષા, મિથ્યાત્વી જે કહે તે મિથ્યા.'

સમ્યગ્દૃષ્ટિ તે સામાન્યથી શ્રુતને વિષે અનુપયોગી પ્રમાદથી જે કોઇ હેતુ વિના જ ભાખે 'તંતુથી પટજ હોઇ' તે મૃષા. વિજ્ઞાનાદિકને પણિ તેથી ઉપજવાવતી. મિથ્યાદૃષ્ટિ પણિ તિમજ ઉપયોગી અથવા અનુપયોગી જે ભાષે, તે મૃષાજ. ઘુણાક્ષરેન્યાયે મિલે હુંતે પણિ છના અને અણુજ્ઞાતાના અવિશેષથી. નિજેચ્છાયે પ્રાપ્તિથી. ઉન્મત્તની પરે. એ ગાથાર્થઃ એતલે મિથ્યાદૃષ્ટિપણિ કોઈક અંશઈ જિનોક્ત પ્રતે ભલું કહેતો થિકો સત્યવાદી હુસે એહની શંકા પણિ ટાલી. ઘુણાક્ષરન્યાયે અનન્યગતિ સત્યાભાસના કહેવાપણાથી. એતલાજ વતી રત્નાકરાવતારિકાગ્રંથને વિષે પણિ સિદ્ધસેનદિવાકરની પરે કહિઇ છે 'અર્થની યથાર્થ અનુભવને વિષે સાધવાનુ કારણ પટુ તે પ્રમાણ પર કહેતા હુઆ. તેહનઈ મતિ અંજન–ભોજનાદિકપણિ વસ્તુ હુઈ પ્રમાણ પ્રગટ જો નીકટને પ્રમાણ હુઈ તઉ સંવાદિજ્ઞાનને જ હુઈ. એ હેતુથી અંધભુજંગના છિદ્રની પરે પરતીર્થીઇ તાહરૂં મત આશ્ર્યુ.'

વલી 'તે વાસના, તે ક્ષણની પરંપરા ભેદે અભેદે અથવા અનુભયપણે પણિ ન ઘટઈ, તે વતી, તટના અદેખનાર જે પક્ષીનો બાલક તહેના ન્યાયથી તાહરા કથન પ્રતે તે આશ્રયો.' હિવિ અન્યતીર્થીકની દૃષ્ટિઓ તાહરે વિષે વર્ત્તઇ છઈ. તિહાં દૃષ્ટાંત કહે છે–જિમ સમુદ્રને વિષે સર્વ નદીઓ આવી મિલે. સમ્યગ્ ઉદય પામી હુઈ. લોકને વિષઈ પણિ ભર્તાનઈ સંબંધે સ્ત્રીઓ ઉદય પામી હુઇ એહવી પ્રસિદ્ધિ. ઇમ નદીઓ પણિ સમુદ્રગામિનીઓ જાણવી. તે દૃષ્ટિઓને વિષે તું, નદી (સે) તિહાં દૃષ્ટાંત કહે છે. પ્રવિભકત જે નદીઓ તેહને વિષે સમુદ્ર ન અવતરે, એ અર્થ. ઇણે અભિપ્રાયે સ્તુતિ પણિ અરિહંતે ઉપદેસ્યુ જે પ્રવચન તેહને આગલે કરી અરિહંતથી અન્યતીર્થીકની દૃષ્ટિઓ ઉપની ઇમ નહી. કહ્યા બિહુ દૃષ્ટાંતના અસંભવથી. એ ઇમ સમ્યગ્ વિચારવુ. ॥ ७६ ॥

अथ दृष्टिविषकल्पं किम् ? इति दर्शयति—

दिट्ठिविसं णिअमग्गप्परूवगो उसभाइ अरिहंतो । इअ वयणं अइदूरट्ठिआणमवि मरणहेउत्ति ॥७७॥

व्याख्या—दृष्टिविषं तावत् निजनिजमार्गस्य-शिवभूत्यादिविकल्पितमार्गस्य आदिप्रणेता श्रीऋषभादिरर्हन्नेवेति वचनमेव । किंभूतम् ? अतिदूरस्थितानामपि मरणहेतुः । दूरस्थितोऽपि पदार्थो दृष्टिविषयो भवति । इह दूरस्थिता जैनमार्गमाश्रिता भव्याः, तेषामुत्सूत्रभाषकाद् दूरतरवर्त्तित्वात् । तेषामपि केषाञ्चित् तदीयवचः श्रुत्वा तेऽप्यहो ! अयं मार्गो युक्तिसङ्गतो जैनत्वेन श्रीऋषभादिप्रणीतो भविष्यतीति शङ्कयाऽपि तन्मार्गानुकूलवर्त्तित्वेन तत्प्रतिकूलवर्त्तिषु साध्वादिषु प्रद्वेषादनन्तसंसारदुःखभाजो भवन्ति । अत एवोत्सूत्रभाषिणो दर्शनमपि निषिद्धम् ।

यदागमः—'उम्मग्गदेसणाए चरण णासिंति जिणवरिंदाणं । वावण्णदंसणा खलु ण हु लब्भा तारिसा दट्ठुं' ॥१॥ त्ति । श्रीआव० वन्दनकनिर्युक्तिः । ( गा० ११५४ ) एतच्चूर्णिर्यथा—जे पुण जहिच्छोवलंभं गहाय अण्णेसिं सत्ताण ससारं णित्थरितुकामाण उम्मग्गं देसयंति । तत्थ गाहा—उम्मग्गदेसणाए चरणं-अणुट्ठाण णासिंति जिणवरिंदाण सम्मत्तं अप्पणो अण्णेसि च ते वावण्णदंसणा जणा, ते चरण ण सद्दहंति, मोक्खो अ विज्जाए अ भणिओ अण्णेसिं मिच्छत्तुप्पायणेण एवमादिएहिं कारणेहिं वावण्णदसणा, खलुसद्दा जइवि केइ णिच्छयविहीए अवावण्णदसणा तहावि वावण्णदसणा इव दट्ठव्वा, ते अ दट्ठुपि ण लब्भा, किमग पुण सवासो संभुंजणा सथवो, हुसद्दो अविसद्दत्थो, सो अ ववहिअमंबंधो दरसिओ चेव, ण लब्भा णाम ण कप्पति त्ति । न चैव दृष्टिविषसर्पदृष्टान्तेन परेषामेवानिष्टफलहेतुः किन्त्वात्मनोऽपीत्यनुक्तोऽपि विशेषो द्रष्टव्यः । यदागमः—'जे उ ण गोअमा ! आणाविराहए से ण

---

હિવે દૃષ્ટિવિષને તે શું ? દેખાડે છે—

દૃષ્ટિવિષસર્પ તે 'નિજમાર્ગના પ્રરૂપક ઋષભાદિક અરિહંત' તે વચન તે અતિ દૂરસ્થિતને પણિ મરણનું હેતુ.

વૃત્તિનો અર્થ —દૃષ્ટિવિષ તે શિવભૂત્યાદિકે કલ્પ્યા જે આપ આપણા માર્ગ તેહનો આદિકર્તા શ્રી ઋષભદેવાદિક અરિહંત જ એહવું વચન જ કેહવું છે ? અતિદૂરસ્થિતને પણિ મરણ હેતુ. દૂર સ્થિતને પણિ પદાર્થ દૃષ્ટિનો વિષય હુઇ ઇહા દૂરસ્થિતજૈનમાર્ગનઇ આશ્રયા ભવ્ય તેહનઇ ઉત્સૂત્રભાષિથી દૂર વર્તિપણાથી તેહને પણિ કોઇકને તેહના વચન સાંભલીને તે પણિ અહો ! એ માર્ગ યુક્તિસંગત, જૈનપણિ કરી ઋષભાદિકે પ્રરૂપ્યો હુસે એહવી શંકાઇ પણિ તેહના માર્ગને અનુકૂલવર્તિપણે કરીને તેણે ઉત્સૂત્રીને પ્રતિકૂલવર્તિ જે સાધ્વાદિક તેહને વિષઇ પ્રદ્વેષથી અનંતસંસાર દુખના ભજનાર હુઇ. એતલાજ વતી ઉત્સૂત્રભાષીનું દર્શન પણિ નિષેધ્યું 'ઉન્માર્ગની દેસનાઇ ચારિત્ર નાસે જિનનરેન્દ્રનું, વ્યાપન્નદર્શની તેહના જોવા યોગ્ય નહીં.' જે યથેચ્છાઇ અર્થગ્રહીને અન્ય સત્ત્વ જે સંસારનિસ્તરવાના ધણી તેહને ઉન્માર્ગ પ્રતે કહે તિહા ગાથા—ઉન્માર્ગદેશનાઇ જિનવરેન્દ્રનું દર્શન ટાલે. સમ્યક્ત્વ પોતાનું પરનું પણિ ટાલે. તે વ્યાપન્ન દર્શની ખલુ શબ્દથી નિશ્ચયનયે અવ્યાપન્નદર્શની તથાપિ વ્યાપન્નદર્શનો પરે જાણવા. તે જોવા યોગ્ય નહીં તો સંવાસ-ભોજન-પરિચય તે કિમ ? તે શ્યુ ? હુ શબ્દ તે અપિશબ્દાર્થ ગ્રહે સંબંધે દેખાડ્યો જ 'ण लब्भा' કહેતા ન કલ્પે. ઇમ દૃષ્ટિવિષસર્પને દૃષ્ટાંતે પરને જ અનિષ્ટ-

अणंताणुबंधी कोहे, से णं अणंताणुबंधी माणे, से णं अणं० केअवे, से णं अणं० लोहे, जे णं अणंताणुबंधिकोहाइकसायचउक्के, से णं घणरागदोसमोहमिच्छत्तपुंजे, जे णं घण० से णं अणुत्तरघोरसंसारसमुद्दे, जे णं अणु० से ण पुणो पुणो जम्मे, पुणो पुणो जरा, पुणो पुणो मच्चू' इत्यादि यावत् 'एगिंदिअत्ताए बेइंदिअत्ताए तेइंदिअत्ताए चउरिंदिअत्ताए णारयतिरिक्खकुमाणुसेसु अणेगविहसारीरमाणसदुक्खं अणुभवमाणे वइज्वए ( वइज्जे ) से तेणट्ठेणं एव वुच्चइ'त्ति । श्रीमहानिशीथे पञ्चमाध्ययने । यद्यपि आज्ञाविराधका इव आराधका जघन्यादिभेदभिन्ना अनेकधा भवन्ति, तथापीह जमाल्यादिवन्नियतोत्सूत्रभाषणेन प्रायोऽभिनिवेशी मन्तव्यः । तस्यैवोन्मार्गस्थितस्य मार्गोत्थापनाभिप्रायेण 'नैते जैनाः किन्तु जैनाभासा' इत्येवंरूपोपदेशेन सन्मार्गनाशकत्वात् नियमेनानन्तसंसारित्वम् ।

यदागमः—'उम्मग्गमग्गसंपट्ठिआण साहूण गोअमा! णूण । ससारो अ अणंतो होइ अ सम्मग्गणासीणं' ॥ १ ॥ इति गच्छाचारप्रकीर्णके ( गा० ३१ ) एवमागमोक्तस्वरूपो निह्नवमार्गमाश्रित एव भवति, न पुनः शाक्यादिमार्गमाश्रितोऽपि, तस्योन्मार्गस्थितत्वेऽपि 'नैते जैना' इत्याद्युपदेशवचनेन मार्गनाशकत्वाभावात् जैनमार्गस्य जैनमार्गत्वेन भाषमाणत्वात् । 'साहूण' मितिपदेन तद्व्यवच्छेदोऽपि कृतो मन्तव्य । तस्य साधुलिङ्गधारित्वाभावेन साधुत्वव्यपदेशासम्भवात् । दिगम्बरस्तु कार्पटिकवेषानुकृतिवेषमात्रधार्यपि 'देवोऽर्हन् वयं जैनाः साधवः' इति वचोभिस्तीर्थोच्छेदाभिप्रायेण च साम्यात्तत्सर्वनिह्नवत्वेन सङ्गृहीतो द्रष्टव्यः । यद्यपि कश्चित् यथाछंदोऽपि उत्सूत्रभाषी सम्भवति तथाप्यपरमार्गाश्रयणाभावेन नियतोत्सूत्रवचनाभावान् न तीर्थोच्छेदाभिप्रायवान् । अतो न नियमेनानन्तसंसारी । एतेन यदुत्सूत्रं तीर्थोच्छेदाभिप्रायहेतुस्तन्नियमेनानन्तसंसारहेतुः । शेष तु भजनयेति तात्पर्यम् । यत्तु तीर्थोच्छेदाभिप्रायहेतुस्तन्निश्चयतस्तीर्थकृदुच्छेदाभिप्रायनियतं भवति, तीर्थस्य तीर्थकृतोऽपि पूज्यत्वात् । यदागमः—'तित्थ-

---

इलने हेतु ५ण नही. तेउ स्थु ? पोताने पणि. अे अणुकशो विशेष जाणुवे. महानिशीथ पंचमाध्ययननो अर्थ ते। २५८ ज छे.

जेइअे आज्ञाना विराधक ते आराधकनी परे जघन्यादिभेदे भिन्न अनेक प्रकारे छे. तोहे पणि जमाल्यादिकनी परे नियतउत्सूत्रने बोलवे प्राहे अभिनिवेशी मानवे।, तेहने ज, उन्मार्गस्थितने मार्गना उत्थापनने अभिप्राये 'अे ते जैन नही तेउ स्थु ? जैनाभास,' ईम उपदेशे सन्मार्गना नाशकपणाथी नियमे ज अनंतससारीपणु: 'उन्मार्गरूप मार्गने विषे चाल्या तेहवा साधुने हे गौतम ! निश्चयई संसार ते अनंत हुई सन्मार्गना नाशकने.' ईम आगमे उक्तस्वरूप निह्नवमार्गने आश्रित ज हुई पणि शाक्यादिकमार्गाश्रित नहीं. तेहने उन्मार्गने विषे रहे पणि. 'अे जैन नहीं', ईत्यादि उपदेश वचने करी मार्गनाशकना अभावथी, जैनमार्गने जैनमार्गपणि कहेवापणाथी 'साधु' अे पदे तेहने। पणि निरास कर्यो मानवे।. तेहने साधुलिंगधारिपणाने अभावे साधुपणाना नामना अभावथी दिगंबर तेउ कापडीना वेषने। अनुकारे वेशमात्रधारी पणि देव अरिहंत अम्हे। जैन साधु' अेहवे वचने तीर्थोच्छेदने अभिप्राये सरीखाईपणाथी सर्वनिह्नवपणे संग्रह्यो जाणुवे।. जेउ कोईक यथाच्छंदो पणि उत्सूत्रभाषी सभवे, तोहे अपरमार्गना आश्रयणुने अभावे निश्चये उत्सूत्रवचनना अभावथी. तीर्थोच्छेदाभिप्रायवंत नहीं. अेतला ज वती नियमे अनंतससारी नहीं अेतले जे उत्सूत्र तीर्थोच्छेदना अभिप्रायनु हेतु. ते नियमे अनंतसारने। हेतु अने बीजु ते विकल्पे, अे

पणोामं काउं कहेइ साहारणेण सद्देण'मित्यादि श्रीआ० नि० ( गा० ५६६ ) एवमुत्सूत्रभाषणेन साम्येऽपि परस्पर ( महदन्तर ) मन्दमन्दतरमुक्तागमानुसारेण स्वयमेव परिभाव्यमिति गाथार्थः ॥ ७७ ॥

अथ आभिग्रहिकाभिनिवेशिकयोरन्तरपरिज्ञानाय गाथामाह—

॥जइवि हु आभिग्गहिओ संसारपहत्तणेण तुल्लो वि । तहवि हु जिणमयसत्तावाई इअरो अ विवरीओ॥

व्याख्या—यद्यप्याभिग्रहिकः–आगाढमिथ्यादृष्टिः शाक्यादिः कुलिङ्गी, ससारमार्गत्वेन तुल्यः–उत्सूत्रभाषिद्रव्यलिङ्गसमान । यदागमः–' सेसा मिच्छद्दिट्ठी गिहिलिंगकुलिंगदव्वलिंगेहिं । जह तिण्णि य मुक्खपहा संसारपहा तहा तिण्णि' ॥१॥ त्ति, उप० (मा० गा० ५२०) हुरेवार्थे । तुल्य एव । तथापि जिन-समयसत्तावादी–जिनशासनसत्ताव्यवस्थापक । इतरस्तु अभिनिवेशी विपरीतो–जिनसमयसत्तापलापी । अय भाव –अन्यतीर्थिकः शाक्यादिः ' के जैना ? ' इत्येवरूपेण पृष्ट' सन् जैनान् प्रत्येव ' अमी जैना ' इत्येव निर्वक्ता स्यात । स च जैने जैनसत्तावक्तृत्वेन जैनसत्ताव्यवस्थापकः । अभिनिवेशी तु जैनाभासो दिगम्बरादिः पृष्टः सन् जैनाभास स्वात्मान जैनत्वेन भाषते ' अह जैन ' इति, जैनान् प्रति तु ' न जैनाः किन्तु जैनाभासा ' इत्येव निर्वक्ता जैनसत्तापलापी महापापी । यतो जैने जैनसत्ताऽपलापमन्तरेण जैनाभासे निजमार्गे जैनसत्ताव्यवस्थापनाऽसम्भवात्, विरुद्धयोर्द्वयोर्जैनसत्त्वासम्भवेन, एकतरस्य जैनाभासत्वे वक्तव्ये उक्तप्रकारेण वक्तृत्वसम्भवात् । उत्सूत्रभाषण चास्य विकल्पितनिजमार्गस्य प्रवृत्तिरागममूलिकेति व्यवस्थाप-

---

तात्पर्य अने जे तीर्थना उच्छेदना अभिप्रायनुं हेतुं ते निश्चये तीर्थंकरना उच्छेदनो जे अभिप्राय तेणें नियन हुई तेहने तीर्थकरने पणि पूज्यपणाथी ' तीर्थने प्रणाम करी कहे साधारणशब्दे ' इम उत्सूत्र भाषवे सरीखाई पणि परस्परी मंदमदतर कह्या आगमने अनुसारे विचारवु ॥ ७७ ॥

हिवे आभिग्रहिक अने अभिनिवेशीनो भेद जणाववाने अर्थे गाथा कहे छे—

यद्यपि आभिग्रहिक संसारमार्गपणे सरीखो छे तउहे जिनमतनी सत्तानो वादी बीजो ते विपरीत

वृत्तिनो अर्थ—जउई आभिग्रहिक–आगाढमिथ्यादृष्टि जे शाक्यादिक कुलिंगी, संसारमार्गपणे सरीखो–उत्सूत्रभाषि द्रव्यलिंगीने सरीखो ' शेष ते मिथ्यादृष्टि गृहिलिंग कुलिंग द्रव्यलिंगे जिम त्रिण्हि मोक्षमार्ग संसारमार्ग तिम तीन ' हु ते एवकारार्थ समानज तथापि जिनशासनसत्तानो थापक, बीजो ते अभिनिवेशी विपरीत–जिनमतसत्तानो अपलापी ए भाव–अन्यतीर्थिक शाक्यादिक ते ' कउण जैन ' ? इम पूछे हुते जैन प्रतेज ' ए जैन ' इणी रीतेज उत्तर दिई ते तउ जैननई विषे जैननी सत्ताने बोलवे करी जैननी सत्तानो थापक अभिनिवेशी तउ जैनाभास दिगंबरादिक ते पूछ्यो हुतो जैनाभास पोताना आत्माने जैन पणि कहे हु जैन एहवु जैन प्रते तउ ए जैन नही, तउ स्यु ? जैनाभास इणी रीते ज कथक हुई जैनसत्तानो अपलापी महापापी जैननई विषे जैननी सत्ताना अपलाप विना जैनाभास जे पोतानो मार्ग, तेहने विषई जैनसत्तानी व्यवस्थापनाना असंभवथी. विरुद्ध एने जैनसत्ताने असंभवे एकने जैनाभासपणु कहेवे कहे प्रकारे कहेवापणाना संभवथी उत्सूत्रभाषीपणु तो तेहने कल्प्या पोताना मार्गनी प्रवृत्ति ते आगममूल एहवा स्थापनने अभिप्राये

नाऽभिप्रायेण सूत्रतोऽर्थतस्तदुभयतो वा निजमतस्थित्यव्यभिचारेणान्यथाप्ररूपणात् । न चैवं शाक्यादिः सम्भवति, तस्य जैनप्रवचनपरतन्त्रप्रवृत्तिनिवृत्त्योरनभ्युपगमेन सूत्रतोऽर्थतस्तदुभयतो वाऽन्यथाप्ररूपणे प्रयोजनाभावात् । अत एवाभिनिवेशी जैनमार्गविध्वंसक एवोच्यते ।

यदागमः—'अहो अ राओ अ समुट्ठिएहिं, तहागएहिं पडिलब्भ धम्मं । समाहिमाघातमजोसयंता, सत्थारमेव फरुसं वयंति' ॥त्ति । सूत्रकृदङ्गे ( अ १३. गा० २ ) सूत्रस्य वृत्तौ-'निह्नवा बोटिकाश्च स्वरुचिविरचितव्याख्याप्रकारेण निर्दोषमपि सर्वज्ञप्रणीतं मार्गं विध्वंसयन्ति कुमार्गं च प्रवेदयन्ती'त्यादि । एवं जैनमार्गविध्वंसकत्वान्यथानुपपत्त्या जैनसत्तापलापित्वसिद्धिः । न चैव शाक्यादिर्जैनमार्गविध्वंसकतया क्वापि भणितः, तस्य जैनसत्तापलापित्वाभावात् । युक्तिस्तूक्तैवं । एतेनानाराधकोऽपि वस्तुगत्या जिनाज्ञाविराधक एव, अप्रतिपन्नजिनाज्ञत्वेन जिनाज्ञाराधकव्यतिरिक्तत्वादिति वचनमप्यपास्तम् । जिनाज्ञाविराधकव्यतिरिक्तत्वेन जिनाज्ञाराधक इत्यपि वक्तु शक्यत्वात् प्रवचनमर्यादाभङ्गापत्तेश्च । यतः अप्रतिपन्नविरतीना चरकपरिव्राजकतिर्यगादीना देशविरतिसर्वविरतिविराधकत्वापत्त्या ज्योतिष्कसौधर्मादूर्ध्वमुपपाताभावः प्रसज्येत, विरत्यनङ्गीकारेणाराधकव्यतिरिक्ताना देशसर्वविरतिविराधकत्वात् । यदागमः—'विराहिअसंजमासजमाणं जहण्णेण भवण ( वासीसु ) उक्कोसेणं जोइसिएसु' ( भ श १, सू० २५-५ ) 'विराहिअसंजमाणं जहण्णेण भवण ( वासीसु ) उक्कोसेणं सोहम्मकप्पे'त्ति । भग० श० १ ( सू० २५-३ )। किञ्च-युगपदुभयोर्विराधकत्वेनोत्कृष्टपदमधिकृत्याप(प्र)कृष्टस्थानप्राप्त्या ज्योतिष्कादूर्ध्वमुपपाताभावप्रसक्तिरेवेति रहस्यमवसातव्यम् ) उपपातस्तु चरकादीना ब्रह्मलोकं, तिरश्चा च सहस्रारमादिशब्दादाजीविकानामच्युत यावद् भणितः। 'चरगपरिव्वायगाणं जहण्णेणं भवण० उक्कोसेणं बंभलोए कप्पे' इत्यादि । तेन विराधकत्वं चेह गृहीतव्रतसामाचार्यपेक्षया न तु श्रद्धानापेक्षयाऽपि । तेनाखण्डितजिनोक्तसामाचारीपालनपरायणानां भव्यद्रव्यदेवानामनादिमिथ्यादृशा व्यापन्नदर्शनानां च निह्नवाना नवमग्रैवेयकं यावदुपपातो न विरुद्ध , अखण्डसामाचारीपरिपालनबलेन तत्रोत्पादात् ।

---

સૂત્રથી અર્થથી અથવા ઉભયથી પોતાના મતની સ્થિતિને અવ્યભિચારે અન્યપ્રકારે પ્રરૂપણુથી ઈમ શાક્યાદિકને ન સંભવઇ. તેહને જૈનપ્રવચનને પરવશ પ્રવૃત્તિ અને નિવૃત્તિને અણુમાનવે સૂત્રથી અર્થથી અથવા ઉભયથી અન્યપ્રકારે પ્રરૂપણુના પ્રયોજનના અભાવથી

એતલાજ વતી અભિનિવેશી તે જૈનમાર્ગનો વિધ્વંસક જ કહિએ. નિહ્નવ અને દિગંબર તે પોતાની રચી કર્યો જે વ્યાખ્યાને પ્રકારે નિર્દોષપણિ સર્વજ્ઞનો પ્રરૂપ્યો માર્ગ તે પ્રતિ વિધ્વંસઈ. અને કુમાર્ગને પ્રકાશે. ઈમ જૈનમાર્ગને વિધ્વંસકપણાની અન્યથા અણુથાવે કરી જૈનસત્તાની અપલાપિપણાની સિદ્ધિ થઈ. એણે શાક્યાદિક તે જૈનમાર્ગને વિધ્વંસકપણે કિહાએ નથી કહ્યા તેહને જૈનના અપલાપપણાના અભાવથી. યુક્તિ તો કહી જ. એતલે અનારાધકપણે વસ્તુગતે જિનાજ્ઞાનો વિરાધક જ અપડિવજી જે જિનાજ્ઞા તે પણિ કરી જિનાજ્ઞારાધકથી વ્યતિરિક્તપણાથી એહવુ વચન પણિ ટાલ્યુ જિનાજ્ઞાના આરાધકથી વ્યતિરિક્તપણિ જિનાજ્ઞાનો આરાધક એહવુ પણિ કહેવાના શક્યપણાથી અને પ્રવચનની મર્યાદાની ભગની આપત્તિથી જે માટિ અપડિવજી જે વિરતિ એહવા જે ચરક-પરિવ્રાજક અને તિર્યગાદિક તેહને દેશવિરતિ-સર્વવિરતિની વિરાધકપણાની આપત્તિ જ્યોતિષ્ક-સૌધર્મ તેથી ઉપરિ ઉપપાતનો અભાવ થાઈ. વિરતિને અનંગીકારઇ આરાધકવ્યતિરિક્તથી દેશવિરતિ અને સર્વવિરતિના વિરાધકપણાથી. આગમાર્થ તો સ્પષ્ટ જ છે.

यदागमः—'अहण्णं भंते ! असंजयभविअदव्वदेवाण'मित्यादि यावत् 'जहण्णेणं भवण (वासीसु) उक्कोसेण उवरिमगेविज्जएसु' त्ति । भग० श० १, उ० २, (सू० २५) वृत्त्येकदेशो यथा—'तस्मान्मिथ्यादृष्टय एव भव्या अभव्याश्च असंयतभव्यद्रव्यदेवा श्रमणगुणधारिणो निखिलसामाचार्यनुष्ठानयुक्ता द्रव्यलिङ्गधारिणो गृह्यन्ते । ते ह्यखिलसामाचारीप्रभावत एव उपरितनग्रैवेयकेपूत्पद्यन्ते । असंयताश्च ते, सत्यप्यनुष्ठाने चारित्रपरिणामशून्यत्वादिति । यद्यपि सामाचारीमधिकृत्य देशाराधकत्व भव्यद्रव्यदेवनिह्नवस्याऽपि सम्भवति, अन्यथा ग्रैवेयकदेवतयोत्पादानुपपत्तिप्रसक्तेः, तथापि निह्नवो जिनाज्ञामधिकृत्य विराधक एव, उत्सूत्रभाषणेन सम्यक्त्वविषयकप्रतिपन्नजिनाज्ञायाः परित्यागात् । इतरस्तु अनाराधक एव, सम्यक्त्वाभावेन उत्सूत्रभाषणव्रतभङ्गाद्यभावेन च आराधकविराधकस्वभावाभावात् । न चैव भेदेऽप्यनाराधकविराधकयोरुपपातमधिकृत्य साम्य शङ्कनीयम्, ग्रैवेयकेष्वपि निह्नवस्य देवदुर्गततयोत्पादात् । देवदुर्गतत्व च न केवल देवकिल्बिषिकत्वादिनैव, तत्र तेषामभावात्, किन्तु सम्मोहत्वेन । स च देवदुर्गतस्ततश्च्युतोऽनन्तकाल संसारे परिभ्रमति ।

यदागमः—'कदप्प १ देवकिब्बिस २ अभिओगा ३ आसुरी य ४ समोहा ५ । ता देवदुग्गईओ मरणमि विराहिए हुति' ॥ १ ॥ त्ति । आतुरप्रत्याख्यानप्रकीर्णके (गा. ३९) व्याख्यादेशो यथा—'सम्मोह'त्ति । सम्मोहयन्त्युन्मार्गदेशनादिना मोक्षमार्गाद् भ्रंशयन्ति ये ते सम्मोहाः । संयता अप्येवंविधा देवत्वेनोत्पन्नाः सम्मोहाः, एवरूपा देवदुर्गतिः ता एव देवदुर्गतयो मरणेऽपध्यानादिना विराधिते सति ततश्च्युता अनन्त संसार परिभ्रमन्ती'ति । एवमुत्सूत्रप्ररूपणेन विराधको नवमग्रैवेयकतयोत्पन्नोऽप्यधम एव, देवदुर्गतत्वादिति बोध्यम् । किञ्च—अनुपात्तसयमत्वेन सयमविराधनाभ्युपगमे निश्चयतो ज्ञानदर्शन-

---

वली समकाल मिह्नुने विराधकपणे उत्कृष्टपद आश्रयीने अपकृष्टस्थानप्राप्ति ज्योतिष्कथी उपरि उपपातना अभावनी प्रसक्ति ज ए रहस्य जाणवु उपपात ते चरकादिकने ब्रह्मलोकताई, तिर्यंचने सहस्रारताई, आदिशब्दथी आजीवकने अच्युतताई कहिओ छे ते वली विराधकपणु तो ग्रह्या व्रतनी समाचारीनी अपेक्षाई पणि श्रद्धाननी अपेक्षाइ नहीं ते वली अखंडित जे समाचारी ते पालवाने तत्पर जे थानार द्रव्यदेव अनादिमिथ्यादृष्टि तेहने अने व्यापन्नदर्शनी जे निह्नव तेहने नवम ग्रैवेयकताई उपजवु ते विरुद्ध नहीं अखंडसमाचारीपरिपालनबले तिहा उत्पादथी. वृत्तिनो एक देश कहे छे— ते माटे मिथ्यादृष्टि ज भव्य अने अभव्य असंयमि भव्यद्रव्यदेव श्रमणगुणना धरनार द्रव्यलिंगधारी ग्रहीई. जे माटे ते सकलसामाचारीप्रभावथी ज उपला ग्रैवेयकने विषे उपजे. अने असंयति ते, छते अनुष्ठाने पणि चारित्रपरिणामे शून्यपणाथी.

जउई समाचारी आश्रयीनई देशाराधकपणु भव्यद्रव्यदेव निह्नवने पणि. ईम नहि तो ग्रैवेयकदेवपणि उत्पादनना अणुउपजवाना प्रसंगथी तउहे निह्नव ते जिनाज्ञा उद्देशीने विराधक ज कहीई, उत्सूत्रभाषणे समकितविषयिणि जे जिनाज्ञा तेहना परित्यागथी. बीजउ ते अनाराधक ज. सम्यक्त्वने अभावे अने उत्सूत्रभाषण व्रतभंगादिकने अभावे आराधक विराधकना स्वभावना अभावथी, ईम भेद छते आराधक अने विराधकने उपजवा आश्रयी सरीखाइपणु शंकवु नहीं. ग्रैवेयकने विषे निह्नवने देवदुर्गतिपणि उत्पादथी देवदुर्गतिपणु तो केवल देवकिल्बिषिकपणि ज नही. तिहा तेहना अभावथी. तवे स्यु ? सम्मोहपणे. ते देवदुर्गत ते तिहाथी च्यव्यो अनंतकाल संसारने भमे, 'कंदर्प' किल्बिष

योरपि विराधना स्यात् । यदागमः—'णिच्छयणयस्स चरणस्सुवघाए णाणदंसणवहोवि 'त्ति । उप० (मों गा. ५१२ ) तथा च सम्यग्दृशामविरतानां देशविरताना वा नियमेन ज्ञानादीना त्रयाणामपि विराधकत्वापत्त्या श्रेणिकादीना तीर्थंकरनामनिकाचनं तीर्थंकरतया प्रत्यायातिश्च न भवेत्, जिनाज्ञाराधकानामेव तीर्थंकरतयोत्पत्ते. । अत एव वैमानिकवर्जदेवेभ्यश्च्युतास्तीर्थकृतो न भवन्ति, ज्योतिष्कपर्यन्तदेवेषु च जिनाज्ञाया अनाराधकविराधकानामेवोत्पादात् । एव च श्रावकमात्रस्य सौधर्मादूर्ध्वमुत्पादाभावप्रसक्तेरपि, अनुपात्तचारित्रत्वेन संयमविराधकत्वात् ।

किञ्च-आसतामन्ये, गृहे वसतां तीर्थकृदादिचरमशरीरिणामपि प्रतिसमयं ज्ञानादिविराधकत्वापत्त्या अत्यन्तमासमञ्जस्यं को नाम वक्तु शक्नुयाद् ? इति पर्यालोच्यम् । न च मल्लिनाथे व्यभिचारः शङ्कनीय., वासुदेवजीवसाधूनामिव कपायमात्रनिमित्तविराधनाया अबाधकत्वात् । ( जन्येन दोषेण विराधनेति व्यपदेशाभावात् ) अन्यथा सूक्ष्मसम्परायगुणस्थानं यावत् कोऽप्याराधको न भवेत्, साम्परायिकीक्रियाहेतुसञ्ज्वलनकषायाणामनवरतमुदयात् । एतेन वासुदेवजीवसाधूना कृतनिदानत्वेन संयमविराधना भविष्यतीति शङ्काऽपि परास्ता, महाशुक्रदेवलोकादावुपपाताभावप्रसक्तेः । विराधितसंयमाना सौधर्मादूर्ध्वमुपपातस्य निषिद्धत्वात् । अत एव अर्हद्वद् वासुदेवा अपि वैमानिकदेवेभ्यश्च्युता एवोत्पद्यन्ते । 'वेमाणिअ हुंति हरि-अरिह ' त्ति (सङ्ग्र० गा० २४४) वचनात् । तेन विराधकत्वं चेह प्रतिपन्नव्रताद्यपेक्षयैव मन्तव्यम् । तच्च श्रीमल्लिनाथजीवसाधोर्नासीदिति बोध्यम् । तस्माद् गौतमादयो जिनाज्ञाया आराधका, विराधकाश्च जमालिप्रभृतयः, शेषास्त्वेकेन्द्रियादिशाक्यादिपर्यन्ता आराधकविराधकेभ्यो भिन्नाः परिशेषादनाराधका एवेति सिद्धं त्रैविध्यं निर्दोषमिति । पञ्चसूत्रकेऽपि तथैव सूचितमिति प्राग्दर्शितम् । एतेन त्रयाणामपि भङ्गाना द्वैविध्यकल्पनायामनाराधकः कस्मिन् भङ्गेऽवतरतीति प्रश्नावकाशशङ्काऽपि परास्ता, त्रयाणामपि परस्परं वैलक्षण्येन समवतारासम्भवात् । अन्यथा पुंस्त्रीनपुंसकादीना त्रयाणामपि द्वैविध्यकल्पने स्त्री कस्मिन् भङ्गेऽवतरतीति प्रश्नावकाशः प्रसज्येतेति चिन्त्यम् । ननु भो ! धार्मिकानुष्ठानमधिकृत्य जैनाजैनयोर्नास्ति भेद., तेनैव बालतपस्व्यपि शीलेन देशाराधको भवति ।

---

આભિયોગિક આસુર અને સંમોહ, એ દેવદુર્ગતિ મરણને વિષે વિરાધિત હુઈ,' ઉન્માર્ગ દેશનાદિકે મોક્ષમાર્ગથી ભ્રંશ કરે, જે તે સંમોહ, સંયતપણે એહવા જે દેવપણે ઊપના તે સંમોહ એહવીઓ દેવદુર્ગતિ તે મરણસમયે અપધ્યાનાદિકે વિગતિ હુતે હુઈ. તિહાથી ચ્યવ્યા અનંતસંસાર ભમે. ઇમ ઉત્સૂત્રપ્રરૂપણે વિરાધક નવગ્રૈવેયકતાઇ ઊપને। પણિ અધમ જ. દેવમાહે દુર્ગતપણાથી એહવું જાણવું.

વલી અણુગ્રહે સંયમપણે કરી સંયમની વિરાધના માને છુ તે નિશ્ચયથી જ્ઞાનદર્શનની પણિ વિરાધના હુઈ. યે માટે આગમ એહવુ કહે છે-' નિશ્ચયનયને ચારિત્રને ઉપઘાતે જ્ઞાનદર્શનનો પણિ વધ થાઇ ' તે વારે સમ્યગ્ દૃષ્ટિ જે, અવિરતિ અથવા, દેશવિરતિ તેહને નિયમઇ જ્ઞાનદર્શનાદિક ત્રિણ્ણુની વિરાધકપણાઈ થાતે શ્રેણિકાદિકને તીર્થંકર નામનું નિકાચન અને તીર્થંકરપણે ઉપજવુ ન હોઈ. જિનની આજ્ઞાના આરાધકને જ તીર્થંકરપણિ ઉત્પત્તિથી. એતલાજ વતી વૈમાનિકવિના દેવથી ચ્યવ્યા તીર્થંકર ન હુઈ. જ્યોતિષુ પર્યંત દેવને વિષે અનારાધક અને વિરાધકને જ ઉત્પત્તિથા. ઇમ શ્રાવકમાત્રને સૌધર્મથી ઉપપાતનો અભાવ થાઇ. અણુગ્રહ્યા ચારિત્રવંતપણે કરી સંયમના વિરાધકપણાથી.

यदागमः—' एवं खलु मए चत्तारि पुरिसजाया पं०, तं०-सीलसपन्ने णाममेगे, णो सुअसंपण्णे १, सुअसंपण्णे णाममेगे, णो सीलसपण्णे २, एगे सीलसपन्ने वि सुअसपण्णे वि ३, एगे णो सीलसंपण्णे णो सुअसंपण्णे ४ तत्थ ण जे से पढमपुरिसजाए से ण पुरिसे सीलव असुअव उवरए अविण्णायधम्मे, एस णं गो० मए पुरिसे देसाराहए पण्णत्ते १, तत्थ ण जे से दोच्चे पुरिसजाए से णं पुरिसे असीलव सुअवं अणुवरए विण्णायधम्मे, एस ण गो० मए पुरिसे देसविराहए पण्णत्ते २, तत्थणं जे से तच्चे पुरिसजाए से ण पुरिसे सीलव सुअव उवरए विण्णायधम्मे, एस णं गो० मए पुरिसे सव्वाराहए पण्णत्ते ३, तत्थण जे से चउत्थे पुरिसजाए से ण पुरिसे असीलव असुअव अणुवरए अविण्णायधम्मे, एस णं गो० मए पुरिसे सव्वविराहए पण्णत्ते ' ४ इत्यादि भग० श० ८ उ० १०, (सू० ३५४)।

वृत्तिर्यथा-' एवमित्यादि । ' एव ' वक्ष्यमाणन्यायेन ' पुरिसजाए 'त्ति । पुरुषप्रकाराः ' सीलव असुअव 'ति । कोऽर्थः ? ' उवरए अविण्णायधम्मे ' त्ति । ' उपरतः ' निवृत्तः स्वबुद्ध्या पापात् ' अविज्ञातधर्मा ' भावतोऽनधिगतश्रुतज्ञानो बालतपस्वीत्यर्थः । गीतार्थानिश्रिततपश्चरणनिरतोऽगीतार्थ इत्यन्ये । ' देसाराहए 'त्ति । देशं-स्तोकमशं मोक्षमार्गस्याराधयतीत्यर्थ. । सम्यग्बोधरहितत्वात् क्रियापरत्वाच्चेति १ । ' असीलव सुअव 'ति । कोऽर्थः ? अणुवरए विण्णायधम्मे त्ति । पापादनिवृत्तो विज्ञातधर्मा च अवि-

---

वली अन्य तो रह्यो, गृहे वसता तीर्थंकरादिक चरमशरीरी तेहने समये समये ज्ञानादिकना विराधकपणानी आपत्ति अत्यंत असमंजसपणुं कउणु कही सकई ? ए विचारवु. मल्लिनाथने विषे व्यभिचार न शंकवो. वासुदेव जीव जे साधु तेहनी परे कषाय मात्रथी उपने दूषणे चारित्रनी विराधना एहवा नामना अभावथी. इम नही तो दशमागुणठाणाताई कोइए आराधक न हुई. सांपरायिकीक्रियानो हेतु जे संज्वलन कषाय तेहना निरंतर उदयथी, एतले वासुदेवजीव साधुने कीधु नियाणु ते पणि संयमविराधना हुसे एहवी शंका टाली महाशुक्र देवलोकादिकने विषे उपपातना अभावना प्रसंगथी विराधितसंयमने सौधर्मथी उपरांत उपजवाने निषिद्धपणाथी. एतलाजवती अरिहंतनी परे वासुदेवपणि वैमानिकदेवलोकथी च्यव्या ज उपजे. ते वती विराधक ते इहा पाडवज्या व्रतादिकनी अपेक्षाइ मानवु. अने ते तो श्रीमल्लिनाथजीवने न हुई. ए जाणवुं.

ते वती गौतमादिक जिनाज्ञा आराधक. अने विराधक ते जमालिप्रमुख, अने शेष-एकेन्द्रीयादिक शाक्यादिपर्यंत आराधकविराधकथी भिन्न, परिशेषथी अनाराधक ज ते वती सिद्ध थयु त्रिविधपणुं निर्दोष. पचसूत्रने विषे तिमज सूचव्यु छे एहवू पूर्वे देखाडयु छे. एतले त्रिणि भंगने द्विविधपणे कल्पनाने विषे अनाराधक ते कीहे भंगे अवतरे ? एहवा प्रश्नना अवकाशनी शंका पणि टाली. त्रिणिने परस्परे विलक्षणपणि समवतारना असंभवथी इम नही तो पुरुष-स्त्री-नपुंसकादिक त्रिणिने द्विविध कल्पनाई स्त्री कउणु भंगने विषे अवतरे ? एहवो प्रश्नावकाश उपजे एहवुं विचारवु.

पूर्वपक्ष-धार्मिकानुष्ठान आश्रयीनें जैनने अने अजैनने भेद छे नहीं, ते वतीज बालतपस्वीपणि शीले करी देशथी आराधक हुई सूत्रार्थ, ए वृत्ति वखाणता स्पष्ट थाशे वती नथी लिख्यो. इम कहीरये ते न्याये पुरुषना प्रकार शीलवंत अने अश्रुतवंत, एतले पोतानी बुद्धि पापथी निवर्त्यो, अनइ अज्ञातधर्म ते कउणु ? भावथी अज्ञातश्रुतज्ञानी बालतपस्वी, ए अर्थ, गीतार्थनी (अ)निश्राई तपश्चरणतत्पर, अगीतार्थ एहवु अन्य आचार्य कहे छे. ते थोडो मोक्षमार्गनो अंश आराधे, सम्यक्ज्ञानरहितपणाथी-अने

रतसम्यग्दृष्टिरिति भावः । 'देशविराहए' त्ति । देशं-स्तोकमंशं ज्ञानादित्रयरूपस्य मोक्षमार्गस्य तृतीयत्रिभागरूप चारित्रं विराधयतीत्यर्थः । प्राप्तस्य तस्यापालनात् अप्राप्ते वें (त्यादि अत्र हि प्रथमभङ्गे बालतपस्वी शीलेन देशाराधको भणितः । द्वितीयभङ्गे अविरतसम्यग्दृष्टिः शीलाभावेन देशविराधकः । एतच्च भवदभिप्रायेण कथं सङ्गच्छते ? इति चेत् । अहो भ्रान्तिः ? भगवत्या एवानुवादवचनमुच्यमानं भवदभिप्रायेणेत्याद्यविमृश्य वक्तृत्वात् । प्रत्युत भवन्तमेव वयं पृच्छामः-इह प्रथमभङ्गे यो बालतपस्वी भणितः, स किं शाक्यादिरन्यतीर्थिकः उत जिनोक्तसामाचारीपरायणो मिथ्यादृष्टिर्वा ? । नाद्यो, जैनानामपसिद्धान्तात् । शाक्यादिमार्गस्योन्मार्गत्वेन तन्मार्गाभिमतानां देवादीनामदेवत्वादिनेव ज्ञानस्य चाज्ञानत्वेनेव शीलस्याप्यशीलत्वेनार्हतोक्तत्वात् । किञ्च-शीलशब्देनेह चारित्र भणितम् । तच्चान्यतीर्थिकमार्गे लेशतोऽपि न भवति') ('तेनान्यतीर्थिकाभिमतशीलेन देशाराधको भवतीति बोध्यम् । अन्यथा तथाभूतशीलस्य कारण प्रज्ञापकस्य ज्ञानमपि वक्तव्यं प्रसज्येत । तच्च न कस्यापि सम्मतं, मिथ्यादृशो ह्यज्ञाने सति ज्ञानस्यासम्भवात् । 'जस्स अण्णाणा तस्स णाणा णत्थि' त्ति वचनात् । द्वितीयस्तु न्याय्य एव । यतस्तथाविधं मोहनीयोदयवशेन जैनाजैनयो सम्यक्त्वस्वरूपमजानानोऽव्यक्तमिथ्यादृष्टिर्भव्योऽभव्यो वा कुतश्चिन्निमित्तात् जिनोक्तशुद्धक्रियापरायणो जैनमार्गपतितो 'भविअदव्वदेवाण'मित्याद्यागमोक्तोऽवसातव्यः । स च शुद्धक्रिया कुर्वाणोऽपि मिथ्यात्वोदये पण्डिततपस्वीति वक्तुमशक्यत्वेनानन्यगत्या बालतपस्वीत्युच्यते । देशाराधकत्वं च 'यदकरणे देशतः सर्वतो वा विराधकत्वं तत्करणे देशतः सर्वतो वा आराधकत्व'मिति नियमबलेन जैनक्रिययैवावसातव्यम् । न पुनरन्यतीर्थिकक्रिययापि, तदकरणे विराधकत्वाभावात् । किञ्च-आराधकत्वं मोक्षकारणाऽऽसेवनेनैव स्यात् । मोक्षकारणं च सम्यक्क्रिययैव भवति 'सम्यग्ज्ञानदर्शनचारित्राणि मोक्षमार्ग' इतिवचनात् । सा च क्रिया जैनमार्गपतितस्य जिनोक्तक्रिया कुर्वतोऽवसातव्या । शाक्यादिमार्गाभिमतक्रिया तु संसारकारणत्वेन मोक्षकारणमेव न भवति । कथं तथाभूतेन शीलेन देशाराधकत्वसम्भावनापीति पर्यालोच्यम् । द्वितीयभङ्गे तु 'प्राप्तस्य तस्यापालना'दिति वचनेन देशविराधकत्वे सिद्धे सिद्धं सूत्रस्य सविषयत्वेन प्रामाण्यमिति ।) (किञ्च-द्वितीयभङ्ग इव प्रथमभङ्गेपि ज्ञानदर्शनयोराराधक एव वक्तव्यः, तस्य तयोरप्राप्तत्वात् । यद्वा सत्त्वेन यद्याराधकत्वं, तर्हि प्रथमभङ्ग इव द्वितीयभङ्गेपि ज्ञानदर्शनयोराराधक एव वक्तव्यः, तस्य तयोः सत्त्वादित्येवमुभयथापि प्रतिवन्दीनामा दोषो दुरपनेय इति । तस्मात् प्रतिपन्नसम्यक्त्वादीनां परिपालनेनाराधकत्वमपरिपालनेन च विराधकत्वमिति भावः । एतेन प्रथमभङ्गव्याख्याया 'गीतार्थानिश्रिततपश्चरणरतोऽगीतार्थ इत्यन्ये' इति यदुक्तम् । तत्र गीतार्थो यदि सम्यग्दृष्टिः तर्हि बालतपस्वी न स्यात् । उक्तञ्च भगवतीचूर्णावपि बालतपस्वीति । यदि च मिथ्यादृष्टिस्तर्हीष्टापत्तिरेव, उक्तस्वरूपस्य सत्त्वादिति तात्पर्यमिति) त्येवमागमवचनात् कथमाराधकानाराधकविराधकलक्षणाना त्रयाणा भङ्गाना मध्ये शाक्यादिकमधिकृत्यानाराधकलक्षणो द्वितीयो भङ्गः सम्यग्भवेत् देशाराधकत्वेनोक्तत्वादिति चेत् । नैव, जैनप्रवचनस्य सम्यगवबोधाभावेनापसिद्धान्तात् । यतो मिथ्यादृष्टेर्ज्ञानस्याप्यज्ञानत्वेनेव तन्मार्गपतितशील-

---

ક્રિયાતત્પરપણાથી. એ પ્રથમ ભંગ. પાપથી નિવર્ત્યો નહીં અને વિજ્ઞાતધર્મ એહવો અવિરતસમ્યગ્દૃષ્ટિ એ ભાવ. દેશ-થોડા અંશ-જ્ઞાનાદિત્રયરૂપ જે મોક્ષમાર્ગ તેહના ત્રીજા ભાગરૂપ જે ચારિત્ર તે વિરાધે એ અર્થ. 'પામ્યાના અપાલનથી અથવા અણપામ્યાથી.' એહવા આગમવચનથી કિમ આરાધક અનારાધક

स्याऽप्यशीलत्वेन प्रज्ञप्तत्वात् । एतच्च 'अन्यभिक्षवो हि जीवाद्यास्तिक्यरहिताः, सर्वथा अचारित्रिण' इति प्रागुपदर्शितमेव । अन्यथा अन्यतीर्थिकाभिमतदेवादयोऽपि देवत्वादिनाऽभ्युपगन्तव्याः प्रसज्येरन्, मोक्षमार्गभूतस्य शीलस्योपदेष्टृत्वात् । तस्माद्—यदनुष्ठानाकरणेन जिनाज्ञाया विराधकत्वं तदनुष्ठानकरणेनैव जिनाज्ञाया आराधकत्वमिति नियमबलेन जिनोक्तमेवानुष्ठानं तथा भवेत् । अङ्गीकृतस्य जिनोक्तानुष्ठानस्याऽपालनेन विराधकत्वं पालनेन चाऽऽराधकत्वमिति प्रवचनविदां प्रतीतमेव । प्राप्तस्य तस्यापालनादिति वचनात् । न चैवं शाक्यादिमार्गानुष्ठानं तथा, तदङ्गीकृत्यापि तत्करणाकरणाभ्यां जिनाज्ञाया आराधनविराधनयोरभावात् । अन्यथा तन्मार्गानुष्ठानत्याजनेन जैनमार्गानुष्ठाने व्यवस्थापनमयुक्तं प्रसज्येत, तदुपदेष्टुर्विराधक[कर्तृ]त्वापत्तेः ।

तेन तदनुष्ठानकारिणो जिनाज्ञाया अनाराधका एवेति सिद्धे, सिद्धं मिथ्यादृष्टिरेव कुतश्चिन्निमित्तादङ्गीकृतजिनोक्तसाधुसामाचारीपरिपालनपरायण एव देशाराधको बालतपस्वीति सम्यगवसातव्यम् । जिनोक्तानुष्ठानपरिपालनमन्तरेणाराधकत्वाभावात् मिथ्यादृष्टित्वमन्तरेण बालतपस्वित्वाभावाच्च । अत एव जिनोक्तसाधुसामाचारीपरिपालनेन मिथ्यादृष्टिः सन्नेवाऽनन्तशो ग्रैवेयकेष्वप्युत्पन्न इति प्रवचने भणितमिति तात्पर्यम् । परमाराधकत्वं विराधकत्वं च जिनोक्तानुष्ठानमधिकृत्यैव कृतप्रतिज्ञानिर्वहणानिर्वहणाभ्यामेवावसातव्यम् । अत एव प्रथमभङ्गे देशेनाप्याराधक एव भणितः, तावन्मात्रस्यैव प्रतिज्ञायाः कृतत्वात् । द्वितीयभङ्गे चाविरतसम्यग्दृष्टिरपि प्राप्तस्य तस्यापालनादिति वचनेन विरतिपरित्यागेनैव देशविरा-

---

વિરાધક લક્ષણુ ત્રિણિ ભંગમધ્યે શાક્યાદિક આશ્રયીને અનારાધક લક્ષણુ બીજે ભંગ સમ્યગ્ હુઇ ?, દેશારાધક પણિ કહ્યાથી

એહવુ મ બોલિ પ્રવચનના સમ્યગ્ અવબોધને અભાવે સિદ્ધાંતવિરુદ્ધથી. જે માટે મિથ્યાદૃષ્ટિના જ્ઞાનને અજ્ઞાનનીપરે તેહના માર્ગમાહિં પતિતશીલને પણિ અશીલપણે પ્રરૂપ્યાપણાથી એ તો 'અન્યભિક્ષુક તે જીવાદિકની આસ્થાઇં રહિત સર્વથા અચારિત્રિયા' એહવુ પૂર્વે દેખાડયુ છે ઇમ નહીં તો અન્યતીર્થીઇ દેવાદિક પણિ દેવાદિપણિ માન્યા જોઇઇ, મોક્ષમાર્ગભૂત જે શીલ તેહના ઉપદેશકપણાથી તે માટે જે અનુષ્ઠાનને અકરવે જિનાજ્ઞાનુ વિરાધકપણું, તે અનુષ્ઠાનને કરવે જ જિનાજ્ઞાનુ આરાધકપણું એહવા નિયમને બલે જિનોક્ત જ અનુષ્ઠાન એહવુ હુઇ. અંગીકૃત તીર્થંકૃતભાષિતાનુષ્ઠાનને અપાલવે વિરાધકપણું પાલવે તો આરાધકપણું એ પ્રવચનવેદીને પ્રતીત જ છઈ 'પામ્યા તેહને અપાલનથી' એ વચનથી પણિ, શાક્યાદિક અનુષ્ઠાન તિમ નહીં અંગીકરીને પણિ તેહને કરિવે અને અણકરવે આરાધન–વિરાધનાના અભાવથી ઇમ નહીં તો તે માર્ગનાં અનુષ્ઠાનને ત્યાજને જૈનમાર્ગના અનુષ્ઠાનનુ વ્યવસ્થાપન અયુક્ત થાઇ. તેહના ઉપદેશકને વિરાધકકર્તૃપણાની આપત્તિથી

તે વતી તે અનુષ્ઠાનના કરનાર જિનાજ્ઞાના અનારાધક જ એહવુ સિદ્ધ થઈ હુતે સિદ્ધ થયુ જે—મિથ્યાત્વી જ કોઇક નિમિત્તથી અંગીકરી જે જિનભાષિત સાધુ સમાચારી તે પાલવાને પરાયણ જ દેશારાધક બાલતપસ્વી, એ સમ્યગ્ જાણવુ જિનોક્ત અનુષ્ઠાન પરિપાલન વિના આરાધકપણાના અભાવથી. અને મિથ્યાદૃષ્ટિપણા વિના, બાલતપસ્વીપણાના અભાવથી એતલા જ વતી જિનભાષિતસાધુસમાચારીને પાલવે કરી મિથ્યાદૃષ્ટિ હુતો જ અનંતવાર ગ્રૈવેયકને વિષે ઉપનો, એહવુ પ્રવચનને વિષે કહિઉ છે એ તાત્પર્ય પણિ આરાધકપણું અને વિરાધકપણું જિનભાષિત અનુષ્ઠાન આશ્રયીને જ કીધી પ્રતિજ્ઞાને

धका भणितः, कृतप्रतिज्ञाया अनिर्वहणात् । न च पापनिवृत्तिरूपेण शीलेन देशाराधकत्वे सिद्धे मिथ्यादृशां पुण्ये प्रवृत्तिः पापे च निवृत्तिर्न स्यादिति वचनेन विरोधः शङ्कनीयः, सम्यक्त्वप्रतिबन्धकासद्ग्रहवत एव मिथ्यादृष्टेर्भावतस्तयोर्निषिद्धत्वात् । न पुन र्द्रव्यतोऽपि । यत्तु तथाभूतस्याऽपि शीलस्यानुमोदनीयत्वं तन्मार्गपतितत्वेन व्यवहारनयवतामेवावसातव्यम्, 'ववहारो वि हु वलव 'मिति वचनात् ।

एतेनाऽन्यतीर्थिकाभिमतं किञ्चिदनुष्ठानं मोक्षहेतुर्भविष्यतीति कल्पनाऽपि परास्ता, तदीयमार्गाणामुन्मार्गत्वेनाऽऽगमे भणितत्वात्। एतच्च 'कुप्पवयणपासंडी सव्वे उम्मग्गपट्ठिआ' इत्यादि प्रागुपदर्शितमेव उपदर्शयिष्यते च सवृत्तिकमनन्तरमपीति बोध्यम् । तेन युगपन्मार्गोन्मार्गक्रिययोरसम्भव एव । नहि कोऽप्यतिनिपुणोऽपि एकेन पादेन मार्गं गच्छत्यपरेण चोन्मार्गमिति । (२) एवं चोभयोरपि प्रकारयोस्सविषयत्वेन प्रामाण्ये सिद्धे ' यदप्राप्तेर्वे 'ति विकल्पेन व्याख्यानं तत् केनाभिप्रायेणेति संशये सम्यग्वक्तृवचनं वयमपि श्रोतुकामाः स्म इति बोध्यम् । यतो यद्यऽप्राप्तिमात्रेण विराधकत्वं स्यात् तर्हि चरकपरिव्राजकादीनां ज्योतिष्कादूर्ध्वमुपपाताभावः प्रसज्येत, मोक्षकारणभूतानां सम्यग्ज्ञानादीनां त्रयाणां लेशतोऽप्यभावेन देशविरतिसर्वविरत्योरुभयोर्युगपद्विराधकत्वात् । एतच्च प्राग् ग्रन्थसम्मत्या प्रदर्शितमेव । तथा द्वादशाङ्गपर्यन्तनानाश्रुतावधिप्रभृत्यप्राप्तिमान् छद्मस्थसंयतो दूरे, केवल्यप्यप्राप्तजिनकल्पादेर्विराधकः प्रसज्येतेति (३) सूक्ष्मदृशा पर्यालोच्यमिति गाथार्थः ॥ ७८ ॥

---

निर्वाहे - अने' अनिर्वाहे ज जाणवु. एतला ज वती प्रथमभंग ते देशे आराधक ज कहीओ. तेतलानी ज प्रतिज्ञाना कीधापणाथी. बीजा भंगने विषे अविरतसम्यग्दृष्टिपणि 'पाम्या तेहना अपालनथी' ए वचने' विरतिने परित्यागे ज अंशे विराधक कह्यो. कीधी प्रतिज्ञाना अनिर्वहणथी.

पापनिवृत्तिरूपशीले करी देशाराधकपणु सिद्ध थइ हुते 'मिथ्यात्वीने पुण्यने विषे प्रवृत्ति अने पापने विषे' निवृत्ति न हुइ' इणे वचने विरोध न शंकवो. सम्यक्त्वनो प्रतिबंधक जे असद्ग्रहवंत मिथ्यादृष्टिने ज भावथी ते बिहुना निषिद्धपणाथी पणि द्रव्यथी नहीं. अने जे तेहवा ए शीलने' अनुमोदनीयपणु ते मार्गमाहे पडि करी व्यवहारनयवतने ज जाणवु 'व्यवहार ते बलवत' ए वचनथी. एतले अन्यतीर्थिकनु मान्यु - काइएक अनुष्ठान मोक्षनु हेतु हुसे ए कल्पना पणि टाली. तेहना मार्गने उन्मार्गपणि' कहेवाथी, ए तो 'कुप्पवयण'० ए पूर्वइं देखाडयु' छइ. अने वली देखाडीस्ये, वृत्तिसहित अनंतरज. ए जाणवु. ते वती मार्ग अनइं उन्मार्गक्रियानो एकइं वारे असंभव ज. कोई चतुरपणि एके पादे मार्गप्रति चाले अने बीजे उन्मार्गप्रते पणि, इम बिहु' प्रकारने विषइं विषयसहितपणि प्रामाण्यपणु सिद्ध थइ हुते जे 'अथवा अप्राप्तथी' एहवु जे विकल्पइं व्याख्यान ते स्यइं अभिप्राये ? एहवो संशय छतइं सम्यक् कथकनु वचन अम्हेपणि' सांभलवा वांछु छु. ए जाणवु'. जे माटे' अणपाम्या वती जो विराधकपणु हुई तो चरक-परिव्राजकादिकने ज्योतिष्कथी ऊंचो उपपातनो अभाव थयो जोइइं. मोक्षना कारणभूत जे सम्यग्ज्ञानादि त्रय तेहना लेशथीपणि अभावे देशविरति सर्वविरति ए बिहुने विराधकपणाथी. ए तो ग्रंथनी संमति पूर्वे' देखाडयु ज छई वली द्वादशांगपर्यंत नानाश्रुत-अवधिप्रमुखनो अप्राप्तिवंत छद्मस्थसंयत तो वेगलो केवली पणि' अणपाम्या जिनकल्पादिकनो विराधक संपजे, एहवु सूक्ष्मदृष्टि विचारवु'. ए गाथानो अर्थः ॥ ७८ ॥

